SRI VENKATESVARA ORIENTAL SERIES—No. 60.

EDITOR:—Prof. J. CHENNA REDDY, M.A., B. Ed.
*Director S. V. O Institute, Tirupati*

# THE KĀDAMBARĪKATHĀSĀRA

OF

## TRIVIKRAMA

EDITED BY

KOMPELLA DAKSHINAMURTY, M.A.,
*Siromani, Reader in Sanskrit. S. V. O. Institute.*








PUBLISHED UNDER THE AUTHORITY OF
SRI C. ANNA RAO, B.A.
*Executive Officer,*
*on behalf of the Board of Trustees, T. T. Devasthanams, Tirupati.*

PRINTED AT
TIRUMALA-TIRUPATI DEVASTHANAMS PRESS
TIRUPATI
1957

श्रीवेङ्कटेश्वरप्राच्यग्रन्थमाला सं. ६०.

सम्पादकः — श्री जी. चेन्नारेड्डि, एम्. ए., बि. इ. डि.,
श्रीवेङ्कटेश्वरप्राच्यपरिशोधनालयाध्यक्षः

॥ श्रीः ॥

# कादम्बरीकथासारः

श्रीत्रिविक्रमविरचितः



कोम्पेल्ल - दक्षिणामूर्ति एम्. ए. शिरोमणिना
श्रीवेङ्कटेश्वरप्राच्यभाषापरिशोधनालये
संस्कृतभाषाशाखाध्यक्षेण
सम्पादितः

तिरुपति
श्री तिरुमल - तिरुपति देवस्थानमुद्रणालये
मुद्राप्य प्रकाशितः
१९५७

# INTRODUCTION.

I feel that it is a proud privilege enjoyed by me that an occasion to select a hither-to-unpublished Sanskrit work for publication under S. V. O. Institute Series presented itself before me. My long cherished wish was to find a rare literary work in Sanskrit language which might be of immense use to the general public with average zeal for literature apart from the professors of Sastras. I am glad that Sri K. Dakshinamurty, M.A., Reader in Sanskrit could readily pick up a work possessing all the characteristics described above within a week after I requested him to select one for editing. So came "Kadambarikathasara" of Trivikrama on to the series.

The Manuscript was found in Sri Venkateswara Oriental Institute Library. It was copied carefully from a Paper Manuscript belonging to Government Oriental Manuscripts Library, Madras, a little over a decade ago very carefully and preserved here.

The poet Trivikrama left no internal evidence yielding knowledge about himself or his work except for a few epithets giving information to the extent that he was the disciple of Sri Vidyadhara Chakravarti and his father was Rajaraja. No other particulars regarding the place, the time and other works of the poet are available. Yet by probing into darkness, Sri K. Dakshinamurty has made sincere attempts in that line to some extent. Whole of his endeavour is centred around the three names Trivikrama, Vidya (dhara) Chakravarti and Rajaraja. However it is only a beginning but not an accomplishment.

The work named by the author as "Kadambarikathasara Sangraha" is of high literary merit. We are unfortunate in being unable to secure the work in its entirety. It is referred to by scholars that the work contained 16 cantos. But the extant text is only of 12 cantos. Taking the volume of story unfinished in comparision to the story finished it is quite probable that the full work would have run to 16 cantos. Trivikrama and Abhinanda rendered Bana's Kadambari into

verse form, the latter having abridged it into 8 cantos. A perusal of both the works gives an impression that Trivikrama has done it with more care in preserving Bana's original. Regarding the details and the appreciation of the work Sri K. Dakshinamurty has dealt with at large in his Sanskrit introduction.

Editing a manuscript for the first time is not a pleasant job. The editor is confronted at every stage with different types of difficulties. पाठान्तर (variae) and ग्रन्थपात (lacunae) are main among them. Another variety is अपपाठ. Editor's discretion regarding पाठान्तर and अपपाठ is a risky responsibility. Here I leave it to the learned reader to judge how far Sri K. Dakshinamurty has been successful in making such conjectural emendations. Personally I feel that the work has been subjected to an unwholesomely hasty passage through the press. A little more care and time devoted by the editor in making attempts to be more faithful to the author would have given the work a better opportunity to gain the expected appreciation from the scholarly public. I am also sorry to express my helplessness in avoiding a considerable number of print mistakes that crept into the text though Sri K. Dakshinamurty himself has personally attended to proof-reading. I assure the public that this condition does not recur in the next edition.

The style of Kadambarikathasara is very lucid and at the same time elegant. So I hope the student of Sanskrit of every class desires to have it as his text book, the master as his handbook and every Educational Institution and Library as an asset.

My thanks are specially due to Dr. V. Raghavan, M.A., Ph.D., who readily approved and encouraged my adventure in editing the work. My thanks are also due to the Curator, Madras Government Oriental Manuscripts Library, for according permission to copy it from their Paper Manuscript.

S. V. U. O. R. Institute,
TIRUPATI.

J. CHENNA REDDY,
*Director.*

॥ श्रीः ॥

# कादम्बरीकथासारस्थ

## विषयानुक्रमणिका



| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ५४ | २२ | ध्वनन् | ध्वनत् |
| ५५ | १८ | मुरवा | मुखा |
| ५६ | १३ | तात्किन्तु | तत्किन्तु |
| ५७ | ३ | बलने | बलेन |
| ५७ | ४ | पुर्वं | पूर्वं |
| ६१ | ९ | दैक्ष्यत | दैक्षत |
| ६४ | १४ | वपुरव्याज | वपुरव्याज |
| ६७ | १६ | दर्शनै | दशनै |
| ८८ | २० | मानाऽह | मानाऽहं |
| १०० | १० | स्फुटद्वन्द्व | स्फुरद्द्वन्द्व |
| १०२ | १६ | सञ्चुप्य | सञ्चूप्य |
| १०७ | १३ | नान्दिनी | नन्दिनी |
| १०९ | ७ | गतम् | गमत् |
| ११० | १९ | वाकप्रे | वाक्प्रे |



|| श्रीः ||

# भूमिका

श्लो || वक्तारः सन्तु सर्वेऽपि स्वाशयस्य प्रकाशने ।
स्वपराशयसंवादिकथास्वेकः त्रिविक्रमः || इति;

प्राकृतव्याकरणकर्ता त्रिविक्रमदेवो मुक्तकण्ठमुवाच । विदितचरमिदं यत् भारतीया विद्वांसः प्रायशो निजनामधेयप्रकाशनसमुद्भवयशोविमुखा इति । तदनादेः कालात् बहवो महनीया निजपरिश्रमफलरूपेषु स्वप्रणीतेषु ग्रन्थेषु निजनामधेयानि न प्रकटयाम्बभूवुः । काले गच्छति विद्वत्परिश्रमफलरूपा रसपुष्टा अपि अनास्वादितरसास्तादृशो बहवो ग्रन्था: कालगर्भे निलीना बभूवुः, भवन्ति, भवेयुश्च ।

अथ उपपञ्चविंशतित्रिविक्रमा वाङ्मयेषु संलक्ष्यन्ते । तेषु केचन त्रिविक्रमा अपरे त्रिविक्रमदेवा अन्ये त्रिविक्रमपण्डिताः पुनरपरे त्रिविक्रमसूरयश्च ।

उपरि निर्दिष्टः श्लोकः प्राकृतव्याकरणकर्तुः त्रिविक्रमदेवस्य । अयं त्रिविक्रमो बाणवंशीयः ; आदित्यवर्मणः पौत्रः ; मल्लिनाथस्य पुत्रोऽयं लक्ष्मीगर्भ-समुद्भवः इति ग्रन्थादेव ज्ञायते । श्री आचार्य पि. यल्. वैद्यमहाशया अस्य प्राकृतव्याकरणमतीतसमनन्तरकाले एव अन्ततः सम्पादयामासुः । तदुपोद्धाते श्रीवैद्यमहाशयाः त्रिविक्रममम्मु त्रयोदशशतकोत्तरकालीनं सयुक्ति निरूपयाम्बभूवुः । अपि च दक्षिणभारतीयोऽयमान्ध्रः स्यादिति सूचयामासुः ।

अथ :—

" कादम्बरीरसज्ञानामाहारोऽपि न रोचते " इति अभियुक्तोक्तिमनुसन्द-धाना बहवः प्राञ्चो विद्वांसः कादम्बरीसमाकुञ्चितचेतसः कादम्बरीरसास्वादं पाय-

पायमन्वभूवन्; रचयामासुश्च कादम्बरीकथासारपूराणि दृश्यश्रव्यभेदभिन्नान्यनेकानि काव्यानि। तत्र अभिनन्दकृतकादम्बरीकथासारमेकमेव काव्यं मुद्रापितमुपलभ्यते। इतराणि दृश्यानि श्रव्यानि च कादम्बरीकथाविलसितानि बहूनि काव्यानि अमुद्रितानि समुपलभ्यन्ते। अभिनन्दकृतमष्टसर्गात्मकं मनोहरं काव्यम्।

अत्र त्रिविक्रमकृतमपरं कादम्बरीकथासाराख्यमतिमनोहरमस्ति किञ्चित् काव्यं यत् षोडशसर्गात्मकं भवेत्। श्रीकृष्णमाचार्यास्तु स्वकीयसंस्कृतवाङ्मय (History of Sanskrit Literature) ग्रन्थे त्रिविक्रमकृतकादम्बरीकथासाराख्यं काव्यं त्रयोदशसर्गात्मकमभिदध्युः। इदं च पुस्तकं मद्रपुरीराजकीयलिखितपुस्तकभाण्डागारे समुपलभ्यते। तदीया प्रतिकृतिरेका श्रीवेङ्कटेश्वरप्राच्यभाषापरिशोधनाख्यपुस्तकभाण्डागाराधिकारिभिः सम्पादिता। श्रीमानवल्लिरामकृष्णमहोदयैरपि त्रिविक्रमकृतमेतत्काव्यं श्रीवेङ्कटेश्वरप्राच्यभाषापरिशोधनाख्यग्रन्थभाण्डागाराय दत्तमुपलभ्यते। अथापि प्रागुक्तराजकीयपुस्तकभाण्डागारीयपुस्तकप्रतिकृतेरेषासम्भिन्नैव।

अस्मिन् त्रिविक्रमकृते कादम्बरीकथासाराख्ये काव्ये द्वादशसर्गाः सम्पूर्णतया उपलभ्यन्ते। त्रयोदशसर्गे तु केवलमादिमः श्लोक उपलभ्यते। उपलभ्यमानग्रन्थावशिष्टकथापर्यालोचनेनापि इदमवगन्तुं शक्यते यत् अयं त्रिविक्रमः षोडशसर्गात्मकं काव्यं रचितवान् स्यादिति।

अयं त्रिविक्रमो राजराजसूनुं सकलविद्याधरचक्रवर्तिशिष्यमात्मानं स्वयमाह। उपलभ्यमानग्रन्थात् इतोऽधिकं किमपि नावगम्यते। यदि अवशिष्टाः सर्गा उपलभ्येरन् किमप्यवगम्येत इत्यन्यदेतत्।

यथावत् निजाशयप्रकाशनचतुरा लोके विरलविरलास्सन्ति। पराशयानुवदनचतुरास्सन्ति नवेति विचिकित्सापदम्। कादम्बरीकथासारप्रणेता अयं त्रिविक्रमः प्राकृतव्याकरणकर्तुः त्रिविक्रमस्य "वक्तारः" इत्यस्य परमं लक्ष्यं भवेदिति मे मतिः। तत् यथा:—

* "भुक्त्वा आस्थानमण्डपमयासीत्। ........तत्कालोचितदर्शनैरवनिपतिभिरमात्यैर्मित्रैश्च सह तास्ताः कथाः कुर्वन् मुहूर्तमिवासांचक्रे। ततो नातिदूरवर्तिनीं 'अन्तःपुरात् वैशम्पायनमादाय आगच्छ' इति ........राजा प्रतीहारीमादिदेश। सा क्षितितलनिहितजानुकरतला 'यथा आज्ञापयति देवः' इति शिरसि कृत्वा आज्ञां यथादिष्टमकरोत्" इति मूलकादम्बरी।

(का. पृ. ३५.)

अत्र शूद्रको महाराजः प्रातराह्निकमास्थानकृत्य यथावन्निर्वर्त्य शुकमुपायनीकर्तुमागतां हरिजनकन्यकां 'विश्रम्यताम्' इत्यभिधाय कृतव्यायामाभिषेकः परिधाय क्षौमवाससी उपरचितपशुपतिपूजश्च समुचितभोजनैस्सह भूपतिभिरभिमतरसास्वादजातप्रीतिः आस्थानमण्डपमयासीदिति तत्र च आस्थाने तत्कालोचितदर्शनैरवनिपतिभिस्तास्ताः कथाः कुर्वन् नातिदूरवर्तिनीं प्रतीहारीमादिदेश च वैशम्पायनमानेतु इति सा च प्रतीहारी यथादिष्टमकरोदिति च श्रवणपेयं बाणो वर्णयाम्बभूव।

अभिनन्दस्तु तमिमं बाणाभिहितमर्थमधोनिर्दिष्टपद्यरूपेण व्यरीरचत्:—

................ "भुक्त्वा शय्यागृहं ययौ ॥

तत्र पर्यङ्कमारुह्य ध्यात्वैव किमपि क्षणम्।
तमन्तःपुरविश्रान्तं शुकमानाययत्पुनः ॥ (अभि. का. क. सा. १-४७)

अत्रैव त्रिविक्रमस्तु एवं रचयामास:—

"निर्वर्त्य भोजनविधिं निरुपद्रवशासनः।
कैश्चिद्राजसुतैस्सार्धं स प्रापास्थानमण्डपम् ॥

अध्यास्त तल्पं भूपालो निस्तरङ्गोत्तरच्छदम्।
भुजङ्गभोगपर्यङ्कं पुमानिव पुरातनः ॥

* Kadambary :-Nirnayasagara Press Ed. 1932.

वैशम्पायननामानमादाय विहगोत्तमम् ।
आगच्छेति प्रतीहारीमादिदेश विशां पतिः ॥

सा तथेति प्रतीहारी प्रणिपत्य महीपतिम् ।
प्रविश्यान्तःपुरं सद्यस्तमादायाययौ पुनः ॥

(त्रिविक्र. का. क. सा. I ५३-५६.)

उपरि निर्दिष्टसारद्वयपर्यालोचनेनेदमवगम्यते यत् अभिनन्दापेक्षया त्रिविक्रमो मूलकथां यथावदनुवदति इति ।

अत्र अयमपरो विशेषः सहृदयैरवगन्तव्योऽवशिष्यते यत् शूद्रको भोजनसमनन्तरमेव प्रातरुपायनीकृतस्य शुकस्य आनयनं किमित्याज्ञापयति इति । प्रातरेव उपायनीकृतस्य शुकस्य आलापश्रवणकौतुकमेव केवलमत्र निदानमिति न मन्तुमुचितम् । अनितरसाधारणेनापि समुचितकारणान्तरेण भाव्यम् । शूद्रको हि महाराजः नागरिकोत्तमः । नागरिकस्येदं लक्षणं यत् अभ्यवहारानन्तरं शुकसारिकाप्रलापनव्यापारानुविधानं नाम । अमुमर्थं कामसूत्रप्रणेता वात्स्यायनोऽपि संवदति । तद्यथा नागरिकवृत्ताध्याये वात्स्यायनः :—

"भोजनानन्तरं शुकसारिकाप्रलापनव्यापाराः ; लावकुक्कुटमेषयुद्धानि ; तास्ताश्च कलाक्रीडाः ; पीठमर्दविदूषकायत्ता व्यापाराः ; दिवाशय्या च ; गृहीतप्रसाधनस्य अपराह्णे गोष्ठीविहाराः" इति ।

यद्यपि शूद्रकस्य प्रातरेव उपायनीकृतस्य शुकस्य आलापश्रवणकौतुकं स्यात् अथापि वात्स्यायनोक्तदिशा नागरिकमेव वृत्तमनुस्मरन् शुकानयनमाज्ञापयामासेति मन्तुमुचितम् ।

अपिच :—

"अथ मुहूर्तादिव वैशम्पायनः प्रतीहार्या गृहीतपञ्जरः.........
कञ्चुकिना अनुगम्यमानो राजान्तिकमाजगाम । .........

कञ्चुकी राजानं व्यज्ञापयत् देव! देव्यो विज्ञापयन्ति देवादेशादेष वैशम्पायनः स्नातः कृताहारश्च देवपादमूलं प्रतीहार्या नीतः' इति अभिधाय गते च तस्मिन्" का. पृ. ३२-३६.

अत्र प्रतीहार्या शुक आनीत इति स च शुकः कञ्चुकिना अनुगम्यत इति च स्पष्टमवगम्यते। कञ्चुकिमुखादभिधीयमानदेवीविज्ञापनेऽपि प्रतीहार्या शुक आनीत इति ज्ञायते। अन्यः कञ्चुकी सौविदल्लापराभिधानः अन्या च प्रतीहारी। तदेवं स्थिते अमुमर्थमभिनन्दः:—

"तं च कञ्चुकिनानीतमादौ पृष्ट्वा सुखादिकम्।
पप्रच्छ कौतुकाक्षिप्तः तद्वृत्तान्तमनन्तरम्"

अभि. का. क. सा I. ४९.

एवं संगृह्णन् न सहृदयहृदयचमत्कारमादधाति। अपि तु स्वकीयाम-समर्थतामेव प्रकटयति। त्रिविक्रमस्तु:—

"तस्यां गतायां विहगं विन्यस्य नृपतेः पुरः।
ततो बद्धाञ्जलिः कश्चित्कञ्चुकी नृपमब्रवीत्॥

देव! विज्ञापयन्ति त्वां देव्योऽयं विहगोत्तमः।
स्नानपूर्वं कृताहारः प्रेषितश्च त्वदाज्ञया॥

इत्युक्त्वा निर्गते तस्मिन् तद्वार्ताश्रवणादरात्।

त्रिवि. का. क. सा. I. ५७-५८.

बाणाशयं यथावदनुवदन् सहृदयहृदयमाह्लादयति परेषामाशयस्य यथा-वदनुवदनपाटवं च प्रख्यापयति। अन्यच्च:—

"राजा वैशम्पायनमपृच्छत् कच्चिदभिमतमास्वादितमभ्यन्तरे भवता किंचिदशनजातम्" इति। का. पृ. ३६.

अमुमेव बाणाभिहितमभिनन्दः 'पृष्ट्वा सुखादिकम्' इत्येतावता निरदिक्षत्। त्रिविक्रमस्तु :—

"वैशम्पायनमुद्दिश्य राजा वचनमब्रवीत्।
अभ्यन्तरेष्वभिमतं कच्चिदास्वादितं त्वया"

त्रिवि. का. क. सा. I. ५९.-६०.

इत्याह। अत्रापि त्रिविक्रमो यथापूर्वं बाणप्रयुक्तमेव पदजातमुपादाय श्रवणपेयं छन्दसा निबबन्धेति पाठकसहृदयैः स्पष्टमवगम्यते। न चैतावन्मात्रम्। विहङ्गमप्रत्युत्तरसन्दर्भेऽपि :—

"स प्रत्युवाच 'देव! किं वा नास्वादितम्; आमत्तकोकिललोचनच्छविर्नीलपाटलः कषायमधुरः प्रकाममापीतो जम्बूफलरसः; हरिनखरभिन्नमत्तमातङ्गकुम्भमुक्तरक्तार्द्रमुक्ताफलत्विषि खण्डितानि दाडिमबीजानि; नलिनीदलहारिन्ति द्राक्षाफलस्वादूनि च चूर्णितानि स्वेच्छया प्राचीनामलकीफलानि; किं वा प्रलपितेन बहुना? सर्वमेव देवीभिः स्वयं करतलोपनीयमानममृतायते" इति।

का. पृ. ३६.

अत्र त्रिविक्रम :—

"एवं वदन्तं नृपतिं प्रत्युवाच विहङ्गमः॥
किं वा नास्वादितं देव! नितरां नीलपाटलः।
कषायमधुरः पीतो जम्बूफलरसो मया॥
मृगेन्द्रभिन्नमातङ्गकुम्भमुक्तासमानि च।
पक्वदाडिमबीजानि खण्डितानि मया विभो!
तुल्यानि नलिनीपत्त्रैः खादंशि स्वेच्छया मया।
दलितानि महीपाल! प्राचीनामलकानि च॥

देव! किं बहुना देव्यो भोज्यैः पञ्चविधैश्च माम् ।
सादरैरुपचारैश्च सुचिरं पर्यतोषयन् ॥

त्रिविक्र. I. ६०-६४.

अत्रापि त्रिविक्रमस्य मूलकथाया यथावदनुवदनचातुर्यं दरीदृश्यते। यद्यपि "गद्यं कवीनां निकषं वदन्ति" इत्यभियुक्तोक्तिः। अत्र च परां काष्ठामधिवसति भट्टबाणः। यस्य कस्यापि तदीययशस्सदृक्षयशोऽधिगमसम्भावनं साहसमात्रम्। अथापि कादम्बरीकथासाररचनासन्दर्भे त्रिविक्रमाभिहितमधोनिर्दिष्टं पद्यं स्मृतिपथमुपारूढं भवति ।

" काव्यं गद्यमयं हृद्यं; पद्यबन्धेन निर्मितम् ।
क्षीरमातञ्चनेनेव यास्यत्येव रसान्तरम् " इति ।

अत्र त्रिविक्रमो बाणस्य गद्यमयं कादम्बरीकाव्यं क्षीरेण स्वस्य कादम्बरीकथासाराख्यं पद्यबन्धेन निर्मितं काव्यं दध्ना च तुल्यति। दधिक्षीरयोश्च कतरदास्वाद्यगुणभूयिष्टमित्यास्वादचतुरा विदाङ्कुर्वन्तु। क्षीरमातञ्चनेन दधिभावमापन्नं रसान्तरमुत्पादयत्येव इति व्यवच्छेदयत्यपि त्रिविक्रमः। तदेतत्सर्वं "आदौ पृष्ट्वा सुखादिकम्" इत्येतावतैव संगृह्णन्नभिनन्दः अथवा कृतपरिचयः त्रिविक्रमोऽत्राभिनन्द्य इति सुधियो विजानते।

अपिच :—

" वैशम्पायनस्तु स्वयमुपजातकुतूहलेन सबहुमानमवनिपतिना पृष्टो मुहूर्तमिव ध्यात्वा सादरमब्रवीत् 'देव! महतीयं कथा; यदि कौतुकमाकर्ण्यताम्—

अस्ति........तमालकिसलयामोदिनी..........अतिकठोरनारिकेलकेतकीकरीर........बकुलपरिगतप्रान्तै........विराजिता.......कात्यायनी प्रचलितखड्गभीषणा........क्वचित्प्रलयवेलेव महा-

वराहदंष्ट्रा .... .... समुत्खातधरणिमण्डला .... .... क्वचिदमरपति-तनुरिव नेत्रसहस्रसङ्कुला, क्वचिन्नारायणमूर्तिरिव तमालनीला........ क्वचिद्विराटनगरीव कीचकशताकुला .... .... क्वचिद्गृहीतव्रतेव दर्भचीरजटावल्कलधारिणी,, अपरिमितबहुलपत्रसंचयापि सप्तपर्णोप-शोभिता, क्रूरसत्त्वापि मुनिजनसेविता, पुष्पवत्यपि पवित्रा विन्ध्याटवी नाम " इति; का पृ. ३७-४२.

अत्र स्ववृत्तान्तश्रवणकौतुकाविष्टं शूद्रकमुद्दिश्य वैशम्पायनोऽस्ति विन्ध्याटवी पूर्वोक्तविशेषणविशिष्टेति वक्तुं प्राक्रमत। उपरिनिर्दिष्टकादम्बरीभागस्य सारमभिनन्द एवं जग्राह :—

" इति पृष्टः क्षितीशेन बहुमानपुरस्सरम्।
क्षणं बुद्ध्यानुसंधाय शुको वक्तुं प्रचक्रमे ॥

देव! विन्ध्याटवी तावत्तव श्रुतिपथं गता।
पूर्वापरपयोराशिवेलासंस्पर्शशालिनी ॥

यदेकदेशे कण्डूलगण्डेभदलितद्रुमे।
उषितौ दण्डकारण्ये ससीतौ रामलक्ष्मणौ ॥ "

अभि. का. क. सा I. ५४-५६.

त्रिविक्रमस्तु :—

" अथ तद्वचनं श्रुत्वा क्षणं तूष्णीमिव स्थितः।
कुतूहलं यदि श्रोतुं श्रूयतामिति सोऽभ्यधात् ॥

अस्ति विन्ध्याटवी नाम नानामृगसमाकुला।
नानाविधलतावृक्षैः संच्छादितदिगन्तरा ॥

तमालतालहिन्तालपूगपुन्नागशोभिता।
केतकीकेसराशोकनारिकेलमनोरमा ॥

कपित्थबिल्वखदिरपलाशवटभासुरा ।
कर्णिकारकरञ्जाम्रकिंकिरातमनोरमा ॥
क्वचित्प्रलयवेलेव वराहोत्खातभूतला ।
क्वचित्कालीतनुरिव प्रचलत्खड्गभीषणा ॥
क्वचिद्विष्णोरिव तनुः तमालश्यामलप्रभा ।
नगरीव विराटस्य क्वचित्कीचकसंवृता ॥
क्वचिन्मूर्तिरिवेन्द्रस्यानेकनेत्रसमावृता ।
क्वचिद्व्रतस्थेव जटादर्भवल्कलधारिणी ॥
अनन्तपर्णयुक्तापि सप्तपर्णोपशोभिता ।
भयङ्करापि ललिता पवित्रा पुष्पवत्यपि ॥
यत्र रामशरोत्कृत्तरक्षोरक्तोदकाप्लुताः ।
वमन्ति तरवोऽद्यापि तद्रागं पल्लवच्छलात् ॥

त्रिवि. का. क. सा. II. १-९.

उपरि निर्दिष्टमूलकादम्बरीमभिनन्दत्त्रिविक्रमरचनाभ्यां परिशीलयतां विपश्चितां निश्चप्रचमिदं यत् त्रिविक्रमो नूनं प्राकृतव्याकरणकर्त्रभिहितस्य परमं लक्ष्यमिति । यद्यपि प्राकृतव्याकरणकर्ता आत्मानमेवाधिकृत्य तथा व्याजहार अथापि तदभिधानं कादम्बरीकथासारप्रणेतरि सर्वात्मना समन्वेतीति परमामोदस्थानम् । आस्वादितकादम्बरीरसानां सहृदयानामुपरिनिर्दिष्टत्रिविक्रमकथासारमाकलयतां नूनं भट्टबाणकादम्बरी स्मृतिपथमुपारूढा भवेदित्यवचनेनैव व्यक्तीभवति ।

किंच :—

"तस्य च ........ अगस्त्याश्रमस्य नातिदूरे ........ उन्निद्रारविन्दमधुद्रवबद्धचन्द्रकम् .... .... सारसितसमदसारसम् ........ कादम्बैरासेवितम् ........ अगाधम् ........पम्पाभिधानं पद्मसरः"

इति ; का. पृ. ४४-४६.

पूर्वोक्तमर्थमभिनन्द एवं वर्णयामास :—

"तस्योपकण्ठे पम्पाख्यमस्ति पुण्यजलं सरः।
सीताकरतलोल्लूनश्रवणाभरणोत्पलम् ॥"

अभि. का. क. सा. I. ५८.

त्रिविक्रमस्तु :—

"तस्याश्रमस्य निकटे हंससारससङ्कुलम्।
कादम्बकुलचञ्चग्रदष्टकिञ्जल्कपिञ्जरम् ॥
उद्भिन्नपद्मविगलन्मधुचन्द्रकितोदकम्।
पम्पानामातिगम्भीरमस्ति पद्मसरोवरम् ॥

त्रिवि. का. क. सा. II. ११-१२.

अत्र मूलकादम्बरीरसास्वादनकाले इव त्रिविक्रमकथासारास्वादनवेलायामपि सहृदयाः तुल्यानन्दनिर्भरा भवेयुरिति कथनं न साहसमात्रम्। त्रिविक्रमः सत्यं बाण इव पम्पासरोवरं सहृदयपाठकनयनगोचरतामापादयति। किं च शाल्मली-वृक्षवर्णनावसरेऽपि त्रिविक्रमः अनितरसाधारणमितराशयानुवदनप्राभावं प्रकटयति। तत् यथा :—

"सरसः पश्चिमे तीरे........ दिक्चक्रवालपरिमाणमिव गृह्णता भुवनान्तरालविप्रकीर्णेन शाखासंचयेन प्रलयकालताण्डवप्रसारितभुज-सहस्रमुडुपतिशेखरमिव विडम्बयितुमुद्यतः ........ निखिलशरीर व्यापिनीभिरतिदूरोन्नताभिर्जीर्णतया शिराभिरिव परिगतो व्रततिभिः ........इतस्ततः परिपीतसागरसलिलैर्गगनागतैः पत्ररथैरिव शा-खान्तरेषु निलीयमानैः क्षणमम्बुभरालसैरार्द्रीकृतपल्लवैर्जलधरपटलैरप्य-दृष्टशिखरः........ शाखाबाहुभिरुपगुह्येव विन्ध्याटवीं स्थितो महान् जीर्णः शाल्मली" इति;

का. पृ. ४७-४८.

अस्यार्थस्य सारं संगृह्णन्नभिनन्दः :—

"तस्यास्ति पश्चिमे तीरे जीर्णः शाल्मलिपादपः ।
आरोहपरिणाहाभ्यां व्याप्तव्योमदिगन्तरः ॥

अभि. का. क. सा. I. ५९.

त्रिविक्रमश्च :—

"पश्चिमे पम्पसरसः तस्य तीरे समुन्नते ।
अवस्थितो दिशो व्याप्य शाखाभिः शाल्मली तरुः ॥

शाखासहस्रसंच्छन्नहरिदन्तो विभाति यः ।
युगान्तताण्डवव्याप्तबाहुषण्ड इवेश्वरः ॥

आमूलाग्रादनेकाभिर्लताभिः परिवेष्टितः ।
यः पुराणतया व्याप्तः शिराभिरिव दृश्यते ॥

पतङ्गैरिव शाखासु लीनैरम्बुभरालसैः ।
यो नूतनैरपि घनैरदृष्टशिखरोन्नतिः ॥

त्रिवि. का. क. सा. II. १३-१६.

अत्र अभिनन्दः "आरोहपरिणाहाभ्यां व्याप्तव्योमदिगन्तरः" इत्येकेनैव विशेषणेन मूलकादम्बरीकलितं शाल्मलीतरुमाकल्पयति । त्रिविक्रमस्तु मूलकादम्बर्यां बाणचित्रितं शाल्मलीपादपं प्रायस्तैरेव पदैः पाठकसमक्षं यथावदवरोपयति ।

अत्र चायमपरो विशेषः । वात्स्यायनो नागरिकवृत्तं नित्यनैमित्तिकभेदेन द्वेधा विकल्प्य नित्यमभिधाय नैमित्तिकं वदन् :—

"घटा निबन्धनं गोष्ठीसमवायः, समापानकं उद्यानगमनं समस्याः क्रीडाश्च वर्तयेत्" इत्याह । समग्री भवन्ति नागरिका यासु ताः समस्याः इत्यर्थः । ततः समस्याः क्रीडाः संगृह्य देश्यास्ताः क्रीडाः कथयन् :—

"सहकारभञ्जिका, अभ्यूषखादिका, बिसखादिका, नवपत्रिका, उदकक्ष्वेडिका, पाञ्चालानुयानं, एकशाल्मली, कदम्बयुद्धानि, तास्ताश्च माहिमान्यो देश्याश्च क्रीडा जनेभ्यो विशिष्टमाचरेयुः। इति सम्भूयक्रीडाः"

इत्याह। तत्र यशोधरविवरणम् :—

"घटानिबन्धनमिति देवानामुद्दिश्य यात्रा घटा। नागरकानां तत्र संहत्यमानत्वात्" इति।

"एकमेव महान्तं कुसुमनिर्भरं शाल्मलीवृक्षमाश्रित्य तत्रत्य कुसुमाभरणानां क्रीडा। यथा वैदर्भाणाम्" इति।

अत्र अस्मत्प्राचीनाभिहितनागरकनैमित्तिकवृत्तान्तर्गतासु क्रीडासु एकशाल्मल्यभिधा क्रीडा दृश्यते। तेन च शाल्मलिवृक्षेण महता कुसुमनिर्भरेण च भाव्यमित्यपि ज्ञायते। काव्येषु वर्णितानां कुसुमावचयजलविहारदोलाकेलिपानगोष्ठीप्रभृतीनां परिशीलनेन इदमवगन्तुं शक्यते यदस्मत्प्राचीनकविपुङ्गवा अस्यैव नागरकवृत्तस्य नितरां स्मरन्तीति। नूनं बाणोऽपि इदमेव मनसि निधाय अतिमहान्तं शाल्मलिवृक्षं सहृदयहृदयावर्जकं वर्णयामासेति विश्वसिमि।

न केवलमेतावदेव :—

"तत्र च शाखाग्रेषु कोटरोदरेषु पल्लवान्तरेषु स्कन्धसन्धिषु जीर्णवल्कविवरेषु ............ शुकशकुनिकुलानि प्रतिवसन्तिस्म; यैः परिणामविरलदलसंहतिरपि स वनस्पतिरविरलदलनिचयश्यामल इवोपलक्ष्यते दिवानिशं निलीनैः" इति; का. पृ. ४८-४९.

अत्र अभिनन्द :—

"तस्मिन् कूनकुलायानि वीतभीतीनि दुर्गमे।
विहङ्गमसहस्राणि निवसन्ति निरन्तरम्॥

अभि. का. क. सा. १-६०.

अत्रैव त्रिविक्रमः :—

"तस्य क्रोडेषु शाखासु जीर्णवल्कपुटेषु च ।
स्कन्धसन्धिषु शौकानि निवसन्ति निरन्तरम् ॥

परिणामगलत्पत्रराशिस्स च वनस्पतिः ।
दिवानिशं निलीनैर्यैस्सपत्र इव लक्ष्यते ॥

त्रिवि. का. क. सा. II. १७-१८.

त्रिविक्रमस्यैतत्पद्ययुगलं यथा मूलकथामतिमात्रं स्मारयति न तथा अभिनन्दस्य पद्यम् ।

तदेतावता कादम्बरीकथासारप्रणेता त्रिविक्रमः प्राकृतव्याकरण-प्रणेत्रा " स्वपराशयसंवादिकथास्वेकः त्रिविक्रमः " इत्यभिहितभाग-धेयसम्पन्न इत्यलं प्रदर्शयितुमिति मन्ये ।

इदमत्र वक्तव्यमवशिष्यते यदद्य न केवलं भारतीया अपितु सर्वेऽपि मानवास्संस्कृतवाङ्मयरसपिपासवस्समुपलक्ष्यन्ते इति । अथापि बहवः केवल-मांग्लभाषामुखेनैव तद्रसास्वादनकुशलाः । तत्तेषां सौकर्यायेदं काव्यमांग्ल-भाषायामस्माभिरनूदितमेवाधिकारिभ्योऽदायि । तदपि कालान्तरे पाठककरक-मलमलङ्कुर्यादित्याशास्महे ।

अमुद्रितग्रन्थानां परिरक्षणाय लेखकसाहाय्येन पुनः पुनः लिखितेषु ग्रन्थेषु तेषां लेखकानां प्रमादादालस्याद्वा केचन अपभ्रंशाः कालक्रमेण ग्रन्थ-शरीरमलङ्कुर्यरिति निर्विवादोऽयमंशः । तत्र च " कपिः " " पिकः " इत्या-दीनि पदानि वर्णयोः केवलं व्यत्यासेन श्रोतृबुद्धौ कियत् बोधवैपरीत्यमुद्बोधयन्ति इति विदितमेवेदं विदुषाम् । तद्यथात्र काव्ये चन्द्रापीडस्य विद्याभ्याससन्दर्भे पद्यमिदमुपलभ्यते :—

पञ्चदशाक्षरमयीं मातृकां मन्त्ररूपिणीम् ।
चन्द्रापीडो गुरुमुखाद्विवेद विनयान्वितः ॥ ५–५ ॥

अत्र पञ्चदशपदं बहुवारमालोच्य पञ्चाशदिति संशोधितः । एवं शोधिता एव पाठा मूले मुद्रिताः । मातृकापाठास्तु ग्रन्थाधोभागे प्रदर्शिताः । यत्र क्वचन केवलं वर्णमात्रमथवा द्वयमेव मूले त्रुटितं तत् कुण्डलिना प्रादर्शि । क्वचित्क्वचित् पाठकसहृदयानां सौकर्याय टिप्पण्यपि संयोजिता । एवं महता परिश्रमेण शोधितोऽपि मातृकापाठः क्वचित् पुनः पर्यालोचनायां क्रियमाणायां शोधनार्ह इव प्रतिभाति । तद्यथा —

हारं हासं च नीहारं तारं हारं निशाकरम् ।
स्वदेहप्रभया कामं न्यक्कुर्वाणामिव स्थिताम् ॥ ६–६९ ॥

अत्र चन्द्रापीडः महाश्वेतायाः प्रथमदर्शनवेलायामुपरिनिर्दिष्टदिशा उत्प्रेक्षयाम्बभूव । अत्र प्रथमहारशब्दसद्भावात् द्वितीयो हारशब्दस्तारशब्देन साकमपनीतः ; तत्कृते घनसारशब्दो निवेशितश्च । अद्य पुनः पर्यालोचयता मया इदमभिमन्यते यत्प्रथमो हारशब्दो हरसम्बन्धीत्यर्थको हासस्य विशेषणीक्रियते चेदांजस्येनान्वेतु शक्यते इति । एवं महता परिश्रमेण शोधिता अपि पञ्चषाः पाठा मुद्रणकाले शोधकानां तदायत्तामपि दृष्टिमपवार्य वञ्चयामासुः । तदधोनिर्दिष्टपट्टिकादिशा पाठकसहृदयाः परिशीलयितुमभ्यर्थ्यन्ते ॥

सोऽयं त्रिविक्रमः किं कालीनः किं देशीय इति विशदं न विज्ञायते । अयं राजराजसूनुं सकलविद्याधरचक्रवर्तिशिष्यमात्मानं कथयतीति प्रागेवाभिहितम् । विद्याधरचक्रवर्तिनामानस्त्रय आसन् विद्वांस इति श्री एम् . कृष्णमाचार्याः स्वकीयसंस्कृतवाङ्मये (History of Sanskrit Literature) न्यरूपयन् । तत्रत्य विषयसंग्रहः :—

होयशलराजास्थानेषु बहवो विद्वांसः अवर्धन्त । तेषु त्रयो विद्याचक्रवर्तिनामधेयाः । तत्र प्रथमो विद्याचक्रवर्ती द्वितीयवीरभल्लालस्य (1172-1219 A. D.)

पुरोधा इत्यभिधीयते। अस्य वीरभल्लालस्य काले शिलासूल्लिखितानां बहूनां शासनानामेष कर्ता। अस्य पुत्रो वैद्यनाथः द्वितीयवीरनरसिंहस्य (1220-1235 A.D.) आस्थानमलञ्चकार। वैद्यनाथपुत्रो द्वितीयः विद्याचक्रवर्ती। अयमेव गद्यकर्णामृतकर्ता। अयमात्मानं सकलविद्याचक्रवर्तिनं कविराजराजअभिनवभट्टबाणं, कलिकालकालिदासं काहलकविसार्वभौमं कालकविकलभं चात्मानमाह। अस्य पुत्रो वासुदेवः श्रीवल्लभ इति प्रख्यातः। अस्य वासुदेवस्य पुत्रस्तृतीयो विद्याचक्रवर्ती। तत्र तत्र होयशलराजप्रशस्तिद्योतकोदाहरणैरयं काव्यप्रकाशमलङ्कारसर्वस्वं च व्याचख्यौ। तृतीयो वीरभल्लालः (1291-1342 A. D.) अमुमादृतवान्। अयं षोडशसर्गात्मकं रुक्मिणीकल्याणं रचयामास। तत्र प्रथमसर्गे होयशलराजवंशप्रशस्तिरस्ति। कविवंशचरितमत्यल्पमुपलभ्यते।

तदेतत्सर्वं पर्यालोचयद्भिरस्माभिरिदं निश्चेतुं शक्यते यत् कादम्बरीकथासारप्रणेता उपरिनिर्दिष्टविद्याचक्रवर्तिषु त्रिष्वन्यतमस्य शिष्यो भवेदिति; तत्रापि द्वितीयतृतीययोरन्यतरस्य च इति। द्वितीयो विद्याचक्रवर्ती अनेकबिरुदालङ्कृतः; तत्रापि च अभिनवभट्टबाणबिरुदालङ्कृतः। तस्य चेदयं त्रिविक्रमः शिष्यः स्यात् मार्कीमयं त्रिविक्रमः प्राकृतव्याकरणकर्तुस्समकालीनो भवेत्। अथापि स प्राकृतव्याकरणकर्ता जैनः इति प्रसिद्धिः। अयं तु कादम्बरीकथासारप्रणेता वैदिकः। तदनयोरैक्यमपादनमर्हति न वेति सहृदयाः कृतबुद्धयो विद्वांसो विदाङ्कुर्वन्तु।

एतद् ग्रन्थशोधनसन्दर्भे युक्तकालं मां तदा तदा प्रतिबोधयतां श्री **डि. टि. ताताचार्याणां** कृतज्ञतामावेदयामि। एतन्मुद्रणप्रतिसमीकरणे **आर्. पद्मनाभो** व्याकरणचतुर्थवत्सरविद्यार्थी मह्यं साहाय्यमाचरितवान्। ग्रन्थान्ते विद्यमानश्लोकानुक्रमणिकासमीकरणे श्रीमत्या **वै. वरलक्ष्म्या,** अस्मत्परिशोधनालयपत्रिकायाः सहायसम्पादयित्र्या, च साहाय्यमाचरितम्। एतद् ग्रन्थप्रचुरणेन मां प्रोत्साहयन्तो देवस्थानाधिकारिणः, अचिरादेव ग्रन्थमतिरमणीयं मुद्रापयन्तो मुद्रणालयाधिकारिणश्च श्लाघाशिरःकम्पमभिनन्दनीयाः॥

| पृष्ठम्. | पङ्क्तिः | मातृकापाठः | शोधितपाठः |
|---|---|---|---|
| २२ | ७ | दधाना | दधान |
| ४० | ४ | शालिनीम् | शालिनीम्? |
| ६४ | २ | प्रदत्तानि | प्रत्तानि |
| ७८ | ९ | कुटिलांचूर्ण | शयामलांश्चूर्ण |
| ८७ | ८ | वारिकाम् | वाटिकाम् |
| ९८ | ७ | वंशकरीराहो | वंशकरीराधो |
| १०० | ५ | केयूरकांतां | केयूरकं तान् |
| १०९ | २१ | पीठिकां | वीटिकां |

इत्थं
विद्वदनुचरः
के. दक्षिणामूर्तिः.

तिरुपति,
९—७—५७.



|| श्रीः ||

श्री त्रिविक्रमविरचितः

# || कादम्बरीकथासारः ||

अप्रबुद्धमपि सर्वतोमुखं
मां प्रबोधितवते परात्मकम् ।
अक्रमस्फुरितसर्वशक्तये
चक्रवर्तिगुरवे नमो नमः || १ ||

उपशमयिता चिन्ताग्रन्थेर्निबर्हयितांहसः
परिणमयिता कल्याणस्य प्रकारयिता श्रियः ।
प्रतिजनयिता दुःखोच्छित्तेः प्रकारयितात्मनो
मनसि भविता नित्यं श्रीचक्रवर्तिकवीश्वरः || २ ||

व्याकोचकोकनदकोमलकान्तिचोरं
संसारसागरविलङ्घनयानपात्रम् ।
कामप्रदं कलितनूपुरमिन्दुमौलेः
पादद्वयं भगवतो मयि सन्निधत्ताम् || ३ ||

यस्याः पञ्चगुणा चतुर्गुणवती याया त्रिभिस्तैर्युता
या द्वाभ्यां मिलिता त्रिभिर्विरहिता हीना चतुर्भिश्च या ।
या वृद्धिं लभते त्रिविक्रमदशां या कर्मणां साक्षिणी
या होत्री विधिकृत्पुरत्रयभिदः ताः पान्तु वो मूर्तयः || ४ ||

४. अष्टमूर्तेः शिवस्य ता मूर्तयो वः पान्तु इत्यन्वयः । यस्या मूर्तेः पृथिवीरूपायाः पञ्चगुणाः शब्दस्पर्शरूपरसगन्धात्मकाः पृथिव्यां पञ्चानामपि गुणानां सत्त्वात् । या चतुर्गुणवती जलमयी मूर्तिरित्यर्थः । जले गन्धाभावादिति भावः । या त्रिभिः तैर्गुणैः शब्दस्पर्श

स्वयं स्थाणुः कश्चिद्धनुरचलमादाय कठिनं
गुणं कृत्वा हीनं विषयनयनोऽप्यच्युतशरः ।
अहो! चित्रं लक्षत्रितयमभिनच्चञ्चलतरं
पुरां भेत्ता सोऽयं भवजलधिमग्नानवतु वः ॥ ५ ॥

यल्लोचनं प्रसवकेतुविनाशहेतुः
यच्छेखरः सुरपितॄन् सुधया धिनोति ।
यस्यार्धमङ्गमनवद्यमनङ्गराज्यं
तद्भाग्यमस्तु हृदयाम्बुरुहे स्थितं वः ॥ ६ ॥

जगदुत्पत्तिसंहारहेतवे वृषकेतवे
नमः फणभृतांपत्या हारिणे भवहारिणे ॥ ७ ॥

श्यामं वामेन भागेन शोणं वामेतरेण च ।
अपर्युषितमद्वन्द्वद्वन्द्वमाद्यं समाश्रये ॥ ८ ॥

अनौत्सुक्यदृढाश्लेषमकचग्रहचुम्बनम् ।
अविप्रलम्भसम्भोगमादिदाम्पत्यमाश्रये ॥ ९ ॥

मञ्जुशिञ्जानमणिवयमञ्जीररुचिरञ्जनम् ।
शरणं चरणं देव्या भवच्छेदकरं भजे ॥ १० ॥

---

रूपात्मकैर्युता तेजोमयी इत्यर्थः तेजसि गन्धरसयो रभावात् । या द्वाभ्यां शब्दस्पर्शात्मकाभ्यां गुणाभ्यां मिलिता वायुरूपा मूर्तिरित्यर्थः । त्रिभिर्विरहिता वायौ रूपरसगन्धानामभावात् । हीना चतुर्भिश्च या स्पर्शरूपरसगन्धैः हीना गगनमयी मूर्तिरित्यर्थः गगनस्य शब्दमात्रगुणकत्वात् । त्रिविक्रमस्य दशा इव दशा यस्यास्तां वृद्धिं लभते चान्द्रमसो मूर्तिरित्यर्थः । या कर्मणां साक्षिणी सूर्यरूपां इत्यर्थः । या विधिवत् होत्री यजमानरूपा इत्यर्थः ।

५. स्थाणुः शाखाविहीनो वृक्षः शिवश्च । अचलं मेरुम् । अहीनं अहीनां सर्पाणां इनं राजानं वासुकिम् । पक्षे हीनमिति । विषमनयनो न समदृष्टिः त्रिलोचनश्च । अच्युतशरः अच्युतो विष्णुः शरो यस्य । पक्षे अचलितशरः । लक्ष्यत्रितयं पुरत्रितयमित्येतत् ।

पद्मकेसरगौराङ्गीं पद्मिनीं पद्मविष्टराम् ।
पद्मां पद्ममुखीं वन्दे पद्मनाभकुटुम्बिनीम् ॥ ११ ॥

द्राक्षापाकमनोहरा सुमनसां चेतश्चमत्कारिणी
पीयूषद्रववर्षिणी श्रवणयोरानन्दनाडिन्धमा ।
सर्वालङ्कृतिशालिनी कवयितुः कस्यापि शिक्षावतो
वैदर्भी जयति प्रसादमधुरा क्षोदक्षमा भारती ॥ १२ ॥

परशुनिशितधारा बुद्धितत्त्वप्रभावाः
कति कति न महान्तः पण्डिताः कुत्र सन्ति ।
अभिनवमधुधाराः शुद्धवाणीविलासा
इह जगति कवीन्द्राः पञ्चषाः प्राज्ञ एव ॥ १३ ॥

श्रीकालिदासादिमहाकवीनां
काव्यं सतां श्रोत्रसुधाप्रवाहम् ।
श्रुत्वा सलज्जो रसभावशून्यं
को वा प्रबन्धं कुरुते प्रबुद्धः ॥ १४ ॥

[1]तथाप्यहं देशिकनायकस्य
दयानिधेः केवलमाज्ञयैव ।
कर्तुं प्रवृत्तोऽस्मि पुनः प्रबन्धं
कवित्वसाम्राज्यभवान्न गर्वात् ॥ १५ ॥

गुरोः कटाक्षपातेन वक्तुमीशो जडोऽप्यहम् ।
कलानिधेः करस्पर्शाद्[2]दृशानोऽपि द्रवन्ति हि ॥ १६ ॥

---

1. तथाप्यहमिति मातृका ।

2. दारमनोऽपीति मातृका ।

काव्यं गद्यमयं हृद्यं पद्यबन्धेन निर्मितम् ।
क्षीरमातञ्चनेनेव यास्यत्येव रसान्तरम् ॥ १७ ॥

---

आसीत्सर्वगुणोपेतः शूद्रको नाम भूपतिः ।
गन्धर्वैरभवद्गीता यत्कीर्तिस्त्रिदशालये ॥ १ ॥

उच्चण्डबाहुदण्डेन रिपुलोकान्निगृह्णता ।
देवान् पूजयता नित्यं येन लोकौ जितावुभौ ॥ २ ॥

यस्मिन् पालयति क्षोणीं क्षपितारातिमण्डले ।
प्रजानामभवन्नूनं गजबन्धेष्ववग्रहः ॥ ३ ॥

भुजगेन्द्रोपमेयेन भुजेन महता चिरम् ।
अन्वशात्समहीपालः क्षितिमम्बुधिमेखलाम् ॥ ४ ॥

वेत्रवत्या परिगता तस्यासीद्धरणीपतेः ।
विदिशा नाम नगरी शक्रस्येवामरावती ॥ ५ ॥

अभिजात्यवयोवृत्तविद्याशीलसमैः सह ।
रममाणो नृपसुतैः कंचित्कालं निनाय सः ॥ ६ ॥

रूपशीलानुरूपेषु [1]वरदारेषु सत्स्वपि ।
यूनस्तस्य महीभर्तुः भोगे द्वेष इवाभवत् ॥ ७ ॥

अथैकदा महीपालो भगवत्युदिते रवौ ।
विधिं समाप्य [2]सान्ध्यं च सर्वाभरणभूषितः ॥ ८ ॥

---

१७. तप्ते पयसि दध्यानयनमातञ्चनम् । स्वतोऽहृद्यं क्षीरमातञ्चनेन दधिभावापन्नमन्यदेवरसान्तरमुत्पादयति तद्वदित्यर्थः ।

३. अवग्रहोऽनावृष्टिरङ्कुशश्च ।

---

1. परदारेषु इति मातृका ।
2. साध्यं इति मातृका ।

हेमसिंहासनवर्ती सुमनोभिरुपाश्रिताम् ।
आस्थानीमभजद्देवः सुधर्मामिव वासवः ॥ ९ ॥

तत्र सिंहासनगतं नर्मालापविनोदिनम् ।
नृपं दौवारिकी काचित् प्रणिपत्य व्यजिज्ञपत् ॥ १० ॥

देव ! द्वारि स्थिता कापि [1]चण्डालकुलसम्भवा ।
कन्या शुकं समादाय पञ्जरस्थं मनोरमम् ॥ ११ ॥

देवाङ्घ्रिदर्शनसुखं कर्तुमुत्सुकते मनः ।
आर्यः शुकोऽप्ययमिति देवं विज्ञापयत्यसौ ॥ १२ ॥

देवः प्रमाणमत्रेति प्रणम्य विरराम सा ।
भ्रूसंज्ञयान्वमंस्तास्याः प्रवेशं पृथिवीपतिः ॥ १३ ॥

निर्गत्य सहसा द्वारि स्थितां मातङ्गकन्यकाम् ।
प्रावेशयत्प्रतीहारी मूर्तेवाज्ञा महीपतेः ॥ १४ ॥

प्रविश्य सा महीपालं भूभृतां मध्यवर्तिनम् ।
ग्रहाणामिव मध्यस्थं प्रभाकरमवैक्षत ॥ १५ ॥

नमन्नृपतिकोटीरप्रत्युप्तमणिरोचिषा ।
रञ्जिते स्फाटिके पीठे न्यस्तवामपदाम्बुजम् ॥ १६ ॥

पार्श्वस्थवारवनितापाणिभिश्चलचामरैः ।
सकङ्कणखणत्कारैः वीज्यमानं शनैः शनैः ॥ १७ ॥

आदाय वेणुलतिकां पाणिना पद्मरोचिषा ।
नृपप्रबोधनार्थं सा जघान मणिकुट्टिमम् ॥ १८ ॥

तेन शब्देन ते सर्वे परावृत्य महीभृतः ।
मातङ्गकन्यकां साक्षाद्ददृशुर्देवतामिव ॥ १९ ॥

---

1. मातङ्गकुल इत्यपि धनुश्चिह्नान्तर्गतं दृश्यते मातृकायाम् ।

मुखमारुतसौरभ्यपतितां मधुपावलिम् ।
पाणिना कङ्कणवता वारयन्तीं प्रतिक्षणम् ॥ २० ॥

पयोधरभराक्रान्त्या सन्नमन्तीं पदेपदे ।
सिञ्जानमणिमञ्जीरामिन्दीवरदलप्रभाम् ॥ २१ ॥

वहन्तीं पाण्डरं गण्डं मुक्तानाटङ्करोचिषा ।
पूर्णचन्द्रसमायुक्तामन्यामिव विभावरीम् ॥ २२ ॥

कुङ्कुमेनानुलिप्ताङ्गीं मुक्तादामविभूषिताम् ।
उन्मिषत्तारकायुक्तां सन्ध्यामभिनवामिव ॥ २३ ॥

देहप्रभावितानेन गारुडोपलरोचिषा ।
तं प्रदेशमशेषेण कुर्वाणामिव तन्मयम् ॥ २४ ॥

आलोलकुन्तलभरामरुणाधरपल्लवाम् ।
स्निग्धायतविशालाक्षीं तामपश्यन्नरेश्वरः ॥ २५ ॥

शातोदरीं सन्नतांसां शतपत्रायतेक्षणाम् ।
तामवेक्ष्यानवद्याङ्गीं विस्मितोऽभूत्परं नृपः ॥ २६ ॥

अथ सा हंसगमनावतंसस्पृष्टभूतलम् ।
उत्तंसिताञ्जलिपुटा प्रणांसीत्पृथिवीपतिम् ॥ २७ ॥

तस्यां कृतप्रणामायां पुरुषः कोऽपि तं शुकम् ।
पञ्जरेण सहादाय भूपालाय न्यवेदयत् ॥ २८ ॥

वैशम्पायननामानममुं जानीहि भूपते !
नाटकेषु च काव्येषु गद्यपद्यमयेषु च ॥ २९ ॥

इतिहासपुराणेषु शास्त्रेषु सकलेषु च ।
कलासु च चतुःषष्ट्यां निष्णातं विहगोत्तमम् ॥ ३० ॥

एनमादाय नः स्वामिदुहिता मञ्जुवादिनम् ।
रत्नानां भाजनं देव इति मत्वा विचक्षणम् ॥ ३१ ॥

उपागता देवपादं तस्मात्स्वीक्रियतामयम् ।
इत्युक्त्वा पञ्जरं तत्र विन्यस्यापससार सः ॥ ३२ ॥

स राजाभिमुखो भूत्वा जयशब्दपुरस्सरम् ।
उद्यम्य दक्षिणं पादमिमामार्यामुदैरयत् ॥ ३३ ॥

स्तनयुगमश्रुस्नातं समीपतरवर्तिहृदयशोकाग्नेः ।
चरति विमुक्ताहारं व्रतमिव भवतो रिपुस्त्रीणाम् ॥ ३४ ॥

तां श्रुत्वा विस्मयोपेतः पार्श्वे हेमासने स्थितम् ।
कुमारपालितं प्राह महामात्यं महीपतिः ॥ ३५ ॥

विभक्तिमात्रानुस्वारस्फुटगीर्यदुदीर्यते ।
इदमेव महच्चित्रमित्युक्तवति भूभुजि ॥ ३६ ॥

स्मित्वा किंचिन्नृपममात्योऽवादीद्विस्मयाकुलम् ।
किमत्र चित्रं देवामी संलपन्ति यथाश्रुयम् ॥ ३७ ॥

अस्फुटालापता जाता शुकानामभिशापतः ।
गजानामपि जिह्वायाः परिवृत्तिरिवागता ॥ ३८ ॥

ततस्तस्मिन् वदत्येवं बधिरीकृतदिङ्मुखम् ।
उदतिष्ठद्दिवो मध्यं गतेऽर्के शङ्खनिःस्वनः ॥ ३९ ॥

तमाकर्ण्य क्षितिपतिरिमां मातङ्गकन्यकाम् ।
विश्रम्यतामिति गृणन् जहावास्थानमण्डपम् ॥ ४० ॥

स्नानभोजनवेलेयमिति मत्वा महीपतिः ।
निखिलानपि भूपालान् विश्रमाय व्यसर्जयत् ॥ ४१ ॥

काञ्चिदादिश्य शुद्धान्तं प्रापयेति विहङ्गमम् ।
विवेशाभ्यन्तरं कैश्चिद्राजपुत्रैर्महीपतिः ॥ ४२ ॥

विश्रमाय क्षितिपतिः परित्यक्तविभूषणः ।
तदा गलत्प्रभाजालः त्विषांपतिरिवाबभौ ॥ ४३ ॥

शस्त्राभ्यासेषु निपुणैःसवयोभिः समन्वितः ।
व्यायामाय कृतोद्योगः खुरलीं प्रविवेश सः ॥ ४४ ॥

निबध्य कक्ष्यया गाढं चण्डातकमनुत्तमम् ।
यथा कायबलं तत्र व्यायाममकरोन्नृपः ॥ ४५ ॥

निटले मञ्जुले सक्तं स्वेदवारि महीपतेः ।
शुक्तिसम्पुटसंलग्नं मुक्तापुञ्जमिवाबभौ ॥ ४६ ॥

स्विन्नं श्रमवशात्तस्य सौम्यमाननपङ्कजम् ।
कलानिधेरिव बभौ सुधानिष्यन्दमण्डलम् ॥ ४७ ॥

अथ स्नानाय सस्त्रीको दीर्घिकां प्राप भूपतिः ।
अप्सरोभिः परिवृतो गङ्गामिव पुरन्दरः ॥ ४८ ॥

स्नानेन पृथिवीपालः नितरां दीप्तविग्रहः ।
मणिराकरसम्भूतः शाणोल्लीढ इवाबभौ ॥ ४९ ॥

ततः स्नात्वा यथाकामं शरदभ्रातिपाण्डरम् ।
हंसद्वन्द्वाङ्कितं क्षौमं पर्यधत्त महीपतिः ॥ ५० ॥

नीलोत्पलदलश्यामः स्वर्णाभरणभूषितः ।
विरराज महीपालः सविद्युदिव तोयदः ॥ ५१ ॥

---

४४. खुरली व्यायामभूमिः ।

४५. चण्डातकं अर्धोरुकम् "अर्धोरुकं वरस्त्रीणां स्याच्चण्डातकमस्त्रिया" मित्यमरः

प्रविश्य देवतागारं विधिवद्वृषकेतनम्
चराचरगुरुं भक्त्या पूजयामास भूपतिः ॥ ५२ ॥

निर्वर्त्य भोजनविधिं निरुपद्रवशासनः ।
कैश्चिद्राजसुतैः सार्धं स प्रापास्थानमण्डपम् ॥ ५३ ॥

अध्यास्त तल्पं भूपालो निस्तरङ्गोत्तरच्छदम् ।
भुजङ्गभोगपर्यङ्कं पुमानिव पुरातनः ॥ ५४ ॥

वैशम्पायननामानमादाय विहगोत्तमम् ।
आगच्छेति प्रतीहारीमादिदेश विशां पतिः ॥ ५५ ॥

सा तथेति प्रतीहारी प्रणिपत्य महीपतिम् ।
प्रविश्यान्तःपुरं सद्यः तमादायाययौ पुनः ॥ ५६ ॥

तस्यां गतायां विहगं विन्यस्य नृपतेः पुरः ।
ततो बद्धाञ्जलिः कश्चित्कञ्चुकी नृपमब्रवीत् ॥ ५७ ॥

देव! विज्ञापयन्ति त्वां देव्योऽयं विहगोत्तमः ।
स्नानपूर्वं कृताहारः प्रेषितश्च त्वदाज्ञया ॥ ५८ ॥

इत्युक्त्वा निर्गते तस्मिन् तद्वार्ताश्रवणादरात् ।
वैशम्पायनमुद्दिश्य राजा वचनमब्रवीत् ॥ ५९ ॥

अभ्यन्तरेष्वभिमतं कच्चिदास्वादितं त्वया ।
एवं वदन्तं नृपतिं प्रत्युवाच विहङ्गमः ॥ ६० ॥

किं वा नास्वादितं देव! नितरां नीलपाटलः ।
कषायमधुरः पीतो जम्बूफलरसो मया ॥ ६१ ॥

मृगेन्द्रभिन्नमातङ्गकुम्भमुक्तासमानि च ।
पक्कदाडिमबीजानि खण्डितानि मया [1]विभो ! ॥ ६२ ॥

[2]तुल्यानि नलिनीपत्रैः स्वादंशि स्वेच्छया मया ।
दलितानि महीपाल ! प्राचीनामलकानि च ॥ ६३ ॥

देव ! किं बहुना देव्यो भोज्यैः पञ्चविधैश्च माम् ।
सादरैरुपचारैश्च सुचिरं पर्यतोषयन् ॥ ६४ ॥

कस्मिन् देशे भवान् जातः ? केन नामाथवा कृतम् ?
कथं शास्त्रेषु चाभ्यासः ? कुतः सम्पादिताः कलाः ? ॥ ६५ ॥

छन्नः कश्चिन्निवसति किं विहङ्गमवेषभाक् ?
अथवा किंनु शापोऽयं ? उत जन्मान्तरस्मृतिः ? ॥ ६६ ॥

कियत् वयः ? कुतो जन्म ? कथं पञ्जरबन्धनम् ?
मातङ्गकन्यकाहस्तं सम्प्राप्तः केन हेतुना ? ॥ ६७ ॥

चरितमखिललोकैः स्तूयमानं त्वदीयं
निखिलमपि नितान्तं श्रोतुमिच्छामि सोऽहम् ।
तदिदमिह ममाचक्ष्वादिमध्यावसाना
दिति पतगपतिं तं पार्थिवो व्याजहार ॥ ६८ ॥

इति श्रीमत्सकलविद्याधरचक्रवर्तिचरणारविन्दशेखरस्य
श्रीराजराजसूनोः त्रिविक्रमस्य कृतौ कादम्बरी-
कथासारसङ्ग्रहाख्ये काव्ये प्रथमः ।
सर्गः समाप्तः ।

---

६२. मुक्तानां रक्तसम्पृक्तत्वात् पक्कदाडिमबीजसादृश्यम् ।

---

1. वि – इति मातृका ।
2. ......पत्रैः स्वादंशि इति मातृका ।

## द्वितीयः सर्गः ।

अथ तद्वचनं श्रुत्वा क्षणं तूष्णीमिव [1]स्थितः ।
कुतूहलं यदि श्रोतुं श्रूयतामिति सोऽभ्यधात् ॥ १

अस्ति विन्ध्याटवी नाम नानामृगसमाकुला ।
नानाविधलतावृक्षैः संछादितदिगन्तरा ॥ २ ॥

तमालतालहिन्तालपूगपुन्नागशोभिता ।
केतकीकेसराशोकनारिकेलमनोरमा ॥ ३ ॥

कपित्थबिल्वखदिरपलाशवटभासुरा ।
कर्णिकारकरञ्जाम्रकिंकिरातमनोरमा ॥ ४ ॥

क्वचित्प्रलयवेलेव वराहोत्खातभूतला ।
क्वचित्कालीतनुरिव प्रचलत्खड्गभीषणा ॥ ५ ॥

क्वचिद्विष्णोरिव तनुःतमालश्यामलप्रभा ।
नगरीव विराटस्य क्वचित्कीचकसंवृता ॥ ६ ॥

क्वचिन्मूर्तिरिवेन्द्रस्यानेकनेत्रसमावृता ।
क्वचिद्व्रतस्थेव जटादर्भवल्कलधारिणी ॥ ७ ॥

1. स्थितम् इति मातृका ।

---

४. किंकिरातः अशोकभेदः शुकानामुत्तरत्र वर्णयिष्यमाणत्वात् ।

५. वराहेण आदिवराहेण उत्खातं भूतलं यस्याः सा, पक्षे वराहैः सूकरैः उत्खातं भूतलं यस्याः सा । खड्गः मृगविशेषः पक्षेऽसिश्च ।

६. तमालवत् श्यामला प्रभा यस्याः सा, पक्षे तमालैः वृक्षविशेषैः श्यामलप्रभा इत्यर्थः । कीचकैःतदाख्यैः पुरुषैः संवृता, पक्षे मारुतपूर्णरन्ध्रैः वेणुभिरित्यर्थः ।

७. नेत्रं लोचनं, पक्षे वृक्षमूलम् (Root) । जटा सटा पक्षे शिफा च ।

अनन्तपर्णयुक्तापि सप्तपर्णोपशोभिता ।
भयङ्करापि ललिता पवित्रा पुष्पवत्यपि ॥ ८ ॥

यत्र रामशरोत्कृत्तरक्षोरक्तोदकाप्लुताः ।
वमन्ति तरवोऽद्यापि तद्रागं पल्लवच्छलात् ॥ ९ ॥

तस्यां स्तम्भितविन्ध्याद्रेः चुलिकीकृतवारिधेः ।
अस्त्याश्रमपदं रम्यमगस्त्यस्य महामुनेः ॥ १० ॥

तस्याश्रमस्य निकटे हंससारससङ्कुलम् ।
कादम्बकुलचञ्च्वग्र[1]दष्टकिञ्जल्कपिञ्जरम् ॥ ११ ॥

उद्भिन्नपद्मविगलन्मधुचन्द्रकितोदकम् ।
पम्पानामातिगम्भीरमस्ति पद्मसरोवरम् ॥ १२ ॥

पश्चिमे पद्मसरसः तस्य तीरे समुन्नते ।
अवस्थितो दिशो व्याप्य शाखाभिः शाल्मलीतरुः ॥ १३ ॥

शाखासंसक्तसंछन्नहरिदन्तो विभाति यः ।
युगान्तताण्डवव्याप्तबाहुषण्ड इवेश्वरः ॥ १४ ॥

आमूलाग्रादनेकाभिर्लताभिः परिवेष्टितः ।
यः पुराणतया व्याप्तः शिराभिरिव दृश्यते ॥ १५ ॥

पतङ्गैरिव शाखासु लीनैरम्बुभरालसैः ।
यो नूतनैरपि घनैरदृष्टशिखरोन्नतिः ॥ १६ ॥

---

1. चञ्च्वग्रं इति मातृका ।

---

८. अनन्तपर्णयुक्तत्वेऽपि सप्तपर्णयुक्ता इति विरोधः । सप्तपर्णः वृक्षविशेष इति तत्परिहारः । पुष्पवती रजस्वलापि पवित्रेति विरोधः । नानाविधपुष्पविशिष्टा इति तत्परिहारः ।

१२. मधुचन्द्रकितोदकं मधुना चन्द्रकितं जले तैलबिन्दुप्रक्षेपेणेव चित्रचित्रमण्डलाकारविशिष्टमुदकं यस्य तदित्यर्थः ।

तस्य क्रोडेषु शाखासु जीर्णवल्कपुटेषु च ।
स्कन्धसन्धिषु शौकानि निवसन्ति निरन्तरम् ॥ १७ ॥

परिणामगलत्पत्रराशिः स च वनस्पतिः ।
दिवानिशं निलीनैः यैः सपत्र इव लक्ष्यते ॥ १८ ॥

तस्मिन् वनस्पतौ रात्रिमतिवाह्यातिवाह्य च ।
उत्थायोत्थाय च प्रातः चरन्ति स्वेच्छया शुकाः ॥ १९ ॥

स्वशावार्थाहृताहाराः सायं प्राप्य वनस्पतिम् ।
स्वेषु स्वेषु कुलायेषु क्षपयन्ति क्षपाममी ॥ २० ॥

शाल्मलीशाखिनस्तस्य कस्मिंश्चिज्जीर्णकोटरे ।
जायया सह तातो मे चिरकालमवर्तत ॥ २१ ॥

अथाहं वर्तमानस्य पितुर्वयसि पश्चिमे ।
एक एवाभवं पुत्रः प्राक्तनैः पापकर्मभिः ॥ २२ ॥

प्रसवोद्भवया माता भृशं वेदनया तया ।
जातं च मामनालोक्य लोकान्तरमवाप सा ॥ २३ ॥

ततः प्रियतमानाशादुःखितोऽपि निरन्तरम् ।
केवलं रक्षणार्थं मे प्राणेष्वास्थां बबन्धसः ॥ २४ ॥

जराशिथिल[1]सर्वाङ्गः स्पन्दितुं च पदात्पदम् ।
अशक्तो जनकस्नेहान्मद्वर्धनपरोऽभवत् ॥ २५ ॥

परनीडान्निपतितं फलशल्कं च तण्डुलम् ।
आदायादाय सदयं सदा मह्यमदात्पिता ॥ २६ ॥

---

1. सप्ताङ्गः इति मातृका ।

---

२६. फलशल्कं फलशकलमित्यर्थः ।

एवं दिने दिने दत्त्वा भोज्यवस्तु यथारुचि ।
मद्भुक्तशेषमशनमात्मनश्चाकरोत्पिता ॥ २७ ॥

एकदाऽखण्डलहरिद्वधूमाणिक्यकुण्डले ।
आविर्भूते स्फुरद्भासि मण्डले चण्डदीधितेः ॥ २८ ॥

यथेच्छं दिक्षु कीरेषु गतेषु निखिलेष्वपि ।
क्रोडस्थितस्य तातस्य मयि चासन्नवर्तिनि ॥ २९ ॥

सहसैव वने तस्मिन् दुष्टसत्वभयङ्करे ।
लतागुच्छोच्चलन्मत्तभृङ्गझङ्कारमेदुरः ॥ ३० ॥

उत्पतत्पक्षिसङ्घातपक्षशात्कारशीकरः ।
उद्द्रोणकाननक्रोडघर्घरध्वनिमांसलः ॥ ३१ ॥

परितो भीतमातङ्गपोतफीत्कारपीवरः ।
सुप्तप्रबुद्धसंक्रुद्धसिंहनादोपबृंहितः ॥ ३२ ॥

विपाटितश्रोत्रपुटो दिगन्तरविजृम्भितः ।
उच्चचालाधिकः क्रूरो निनदो मृगयोद्भवः ॥ ३३ ॥

तमाकर्ण्याधिकं क्रूरं भयात्सञ्जातवेपथुः ।
तत्प्रतीकारबुध्याहं प्राविक्षं पक्षतिं पितुः ॥ ३४ ॥

अथ संरम्भसहितमितो मृगकदम्बकम् ।
इतो मतङ्गजकुलमितो गवयसञ्चयः ॥ ३५ ॥

इतः शार्दूलनिवहः इतो भल्लूकसंहतिः ।
इतो गोकर्णसङ्घात इतः शरभसञ्चयः ॥ ३६ ॥

इतो यूथं वराहाणां श्वापदानामितो गणः ।
चामराणामितो बृन्द इतो वाहद्विषां कुलम् ॥ ३७ ॥

---

३४. पक्षतिं पक्षमूलम् ।

इतः कपिञ्जलरुतमितः क्रकरकूजितम् ।
इतो हरिनखोद्भिन्नकुम्भकुञ्जरबृंहितम् ॥ ३८ ॥

आकर्ण्यतामयं शब्दः सशरं गृह्यतां धनुः ।
आरुह्यतामियं शाखा हरिदालोक्यतामियम् ॥ ३९ ॥

अन्योन्यमेवं वदतो मृगयासक्तचेतसः ।
अश्रौषं जनसङ्घस्य कोलाहलमुदञ्चितम् ॥ ४० ॥

ततो मन्दरमन्थानमथिताम्भोधिदुःसहैः ।
क्रूरैः केसरिणां नादैः दरीमुखविसर्पिभिः ॥ ४१ ॥

शरताडनसंत्रस्तमत्तमातङ्गबृंहितैः ।
कुण्डलीकृतकोदण्डशिञ्जिनीशिञ्जितैरपि ॥ ४२ ॥

स्वयूथभ्रष्टवित्रस्तहरिणीकरुणारवैः ।
भिल्लभल्लविनिर्भिन्नभल्लूकनिनदैरपि ॥ ४३ ॥

धावतां सारमेयाणां घर्घरैर्भषितैरपि ।
सर्वत्र तन्महारण्यं प्रकम्पितमिवाभवत् ॥ ४४ ॥

शान्तकोलाहले तस्मिन् स्तैमित्यं कानने गते ।
निर्वृष्टमूकजीमूतनिकुरम्बानुकारिणि ॥ ४५ ॥

निष्क्रम्य पितुरुत्सङ्गादीषत्सभयकौतुकम् ।
दिदृक्षुरहमाशान्तां चक्षुः प्राहिणवं शनैः ॥ ४६ ॥

ततः तस्मान्महारण्यादनेकमुखमापतत् ।
दुःसहं दानवकुलं नागलोकादिवोत्थितम् ॥ ४७ ॥

यमकिङ्करसङ्काशं वेतालनिकरोपमम् ।
अद्राक्षं शाबरं बृन्दं पापकर्मेव मूर्तिमत् ॥ ४८ ॥

३८. क्रकरो पक्षिविशेषः ।

तन्मध्यवर्तिनं घोरं प्रथमे वयसि स्थितम् ।
अङ्गानामतिकार्कश्यादायसेनेव निर्मितम् ॥ ४९ ॥

वराटमालाग्रैवेयै [1]भूषणैरावृताननैः ।
सरमासहितैः श्रान्तैरावृतं विश्वकद्रुभिः ॥ ५० ॥

वीतंसपाणिभिः कैश्चित् कैश्चि[2]दुन्माथहारिभिः ।
वागुराधारिभिः कैश्चित् कैश्चिद्दीपकवाहिभिः ॥ ५१ ॥

एवं विधैर्महासत्त्वैः [3]नाभिलैरनुधावितम् ।
व्यलोकयं च मातङ्गनामानं शबरेश्वरम् ॥ ५२ ॥

आसाद्य शाल्मलीमूलमवरोपितकार्मुकः ।
विश्रमाय परिश्रान्तः तत्रैव निषसाद सः ॥ ५३ ॥

विश्रम्य च क्षणं सोऽयं वनेचरचमूपतिः ।
किरातैः सकलैः सार्धं प्रतस्थे पक्कणं प्रति ॥ ५४ ॥

गतेषु तेषु सर्वेषु जीर्णः कश्चिद्वनेचरः ।
अलब्धपिशितस्तत्र पिशितार्थी व्यलम्बत ॥ ५५ ॥

सोऽयं शुककुलैः पूर्णं दुरारोहं वनस्पतिम् ।
पिबन् प्राणिनिवासाकं आमूलाग्राद्व्यलोकयत् ॥ ५६ ॥

---

1. ग्रैवेयै .... वृताननैः इति मातृका ।
2. कैश्चिदुन्मादहारिभिः इति मातृका ।
3. नाफलैः इति मातृका ।

५०. विश्वकद्रुभिः मृगयाशुनकैरित्यर्थ.
५१. वीतंसः आनायः ।
उन्माथः मृगबन्धनपेटिकाविशेषः
वागुरा जालः ।
५२. नाभिलः बृहद्भास्मिः ।

अनेकतालतुङ्गाग्रं स विष्वक्कण्टकैर्वृतम् ।
तमङ्क्लेशेन सोपानैरिवारुक्षद्वनस्पतिम् ॥ ५७ ॥

ततः शाखासु शाखासु क्रमेण परितश्चरन् ।
कांश्चिदुड्डयनाशक्तान् कांश्चित्तत्कुसुमोपमान् ॥ ५८ ॥

कांश्चिदाविर्भवत्पक्षान् कांश्चिदर्कफलोपमान् ।
व्यधादपगतप्राणान् अखिलान् कीरशावकान् ॥ ५९ ॥

तस्य क्रूरतरं कर्म पश्यन् पापात्मनः पिता ।
उच्छुष्कतालुरुद्भूतवेपथुर्भ्रान्तलोचनः ॥ ६० ॥

प्राणसंशयकालेऽपि स्नेहान्मद्रक्षणाकुलः ।
अतिष्ठत्क्रोडभागेन मामवष्टभ्य कातरः ॥ ६१ ॥

आगत्य कोटरद्वारं स वामं भोगिभीषणम् ।
करं प्रसारयामास कालदण्डमिवापरम् ॥ ६२ ॥

दत्तचञ्चुपुटाघातमुत्कूजन्तं मुहुर्मुहुः ।
कोटराद्बहिराकृष्य प्राणैरेनं व्ययूयुजत् ॥ ६३ ॥

भयसङ्कुचिताङ्गत्वात् सावशेषतयायुषः ।
तत्पक्षसम्पुटगतं मामपश्यन्नलुब्धकः ॥ ६४ ॥

मृतं शिथिलमूर्धानं भिलस्तातमधोमुखम् ।
स्वमार्जितं पुण्यमिव व्यक्षिपत्पृथिवीतले ॥ ६५ ॥

तातपक्षपुटे लीनः तातेनाहं सहापतम् ।
पल्लवः पाण्डुपत्रेण पवनस्येव वेगतः ॥ ६६ ॥

ततो मां जीर्णपर्णस्य पुञ्जे पतितमैक्षिषि ।
अङ्गानि मम येनैव नाशीर्यन्त मृदून्यपि ॥ ६७ ॥

यावदत्युन्नतात्तस्मात्तरोरवतरत्यसौ ।
प्राणभीत्येतरत् स्थानं तावज्जिगमिषुर्द्रुतम् ॥ ६८ ॥

अन्तकास्यादिवात्मानं मन्यमानो विनिर्गतम् ।
पदात्पदमशक्तोऽहं गन्तु तत इवोल्लुठन् ॥ ६९

अप्रविष्टार्ककिरणः तातस्याङ्कमिवापरम् ।
तमालशाखिना मूलमयामभ्यणवातनः ॥ ७० ॥

शाखान्तरस्थितानन्यान्निगृह्य शुकशावकान् ।
तत्क्षणादुन्नतात्तस्मात्तरोरवततार सः ॥ ७१ ॥

मृतान् पत्रपुटे सोऽयं निक्षिप्य शुकशावकान् ।
कयाचिल्लतया गाढं अबध्नादन्तिकस्थया ॥ ७२ ॥

अंसे निधाय च शराशनमाततज्य
मादाय तच्छुकशिशूनखिलान् भुजेन ।
मार्गेण तेन शबरेन्द्रगतेन सोऽपि
प्रातिष्ठत द्रुततरं प्रवयाः पुलिन्दः ॥ ७३ ॥

इति श्रीमत्सकलविद्याधरचक्रवर्तिचरणारविन्दशेखरस्य
श्रीराजराजसूनोः त्रिविक्रमस्य कृतौ कादम्बरी-
कथासारसङ्ग्रहाख्ये काव्ये द्वितीयः
सर्गः समाप्तः ।



## तृतीयः सर्गः

अथ मृत्युनिभे तस्मिन् प्रस्थितेऽपि वनेचरे ।
निवृत्तः स्यादिति भयात्तत्रैवाशयिषि क्षणम् ॥ १ ॥

अत्यायासितसर्वाङ्गं पतनादतिदूरतः ।
शोकेनोच्छुष्कहृदयं पितृनाशभयेन च ॥ २ ॥

उदन्या भयसञ्जाता समस्ताङ्गोपतापिनी ।
एवं विधेऽपि काले मामनैषीत्परतन्त्रताम् ॥ ३ ॥

तमालमूलान्निर्गत्य तस्मादुदकवाञ्छया ।
उपसर्तुं सरस्तीरमहमैच्छं शनैः शनैः ॥ ४ ॥

मुहुर्मुखेन [1]पततो मुहुर्विलुठतो भुवि ।
श्रमातुरस्य मे कामं मतिरेवं विधाभवत् ॥ ५ ॥

अस्मिन् जगति जन्तूनां प्राणेभ्योऽन्यन्नकिंचन ।
एवं तातेऽप्युपरते भूयोऽहं [2]प्राणिमीति यत् ॥ ६ ॥

नैवात्मनो मदर्थं यो मृत्युकालेऽपि शोचति ।
मया तेनैव न मृतमीदृशी मे कृतघ्नता ॥ ७ ॥

तेस्तैरुपायैः शोच्येन मृतायामपि मातरि ।
पित्रा यद्वर्धितं यत्नात्तत्सर्वं विस्मृतं क्षणात् ॥ ८ ॥

कृपणाः खल्वमी प्राणा ममैवमुपकारिणम् ।
अद्य कुत्रापि गच्छन्तं पितरं नानुयान्ति यत् ॥ ९ ॥

1. मुखेन पीनो इति मातृका
2. प्राणिमीति इति मातृका ।

अद्यापि तत्पद्मसरः शुद्धाप्ममतिदूरतः ।
श्रूयन्ते राजहंसानामस्फुटानि रुतानि यत् ॥ १० ॥

पिपासात्यन्तसन्नानि दुर्बलान्यङ्गकानि मे ।
पदादेकं पदमपि नालं गन्तुमितः परम् ॥ ११ ॥

परं सीदति चित्तं च प्रभुरस्मि न चात्मनः ।
चक्षुरत्यन्धतामेति हन्त ! किं करवाण्यहम् ? ॥ १२ ॥

अनिच्छतः किं मृत्युं मे विधिरद्योपपादयेत् ?
मयि सञ्चिन्तयत्येवं पिपासावशवर्तिनि ॥ १३ ॥

जाबालिनामधेयस्य मुनेरासन्नवर्तिनः ।
पुत्रो हारीतको नाम सिस्नासुस्तत्सरोऽभ्यगात् ॥ १४ ॥

स निशम्य दयालुर्मामनाथमतिदुःखितम् ।
आसन्नवर्तिनं प्रोचे कंचिन्मुनिकुमारकम् ॥ १५ ॥

अये ! शुकशिशुः कश्चिदयमापदमागतः ।
दीनमेनं समालोक्य दूयते हृदयं मम ॥ १६ ॥

अनाविर्भूतपक्षोऽयं पतित किं वनस्पतेः ।
आहोस्विद्वैनतेयास्यादद्य किं धरणीं गतः ? ॥ १७ ॥

साङ्गकम्पं सदाक्लेशात् [1]दीर्घदीर्घं श्वशित्यसौ ।
विवृणोति मुहुश्चञ्चुपुटमामीलितेक्षणः ॥ १८ ॥

ग्रीवामपि न शक्नोति सन्धारयितु [2]मात्मनः ।
अयमेवं [3]स्थितः स्याचेन्म्रियते नात्र संशयः ॥ १९ ॥

---

1. दीर्घाद्दीर्घं इति मातृका ।
2. मागताम् इति मातृका ।
3. स्थितं स्याचेत् इति मातृका ।

तदेहि यावदेवायमसुभिर्न वियुज्यते ।
गृहाण तावदेवैनं धर्मोऽयं परमो हितः ॥ २० ॥

एवमुक्त्वा स धर्मज्ञो दयया मां दृढव्रतः ।
तेनैव मुनिपुत्रेण तूर्णं मानाय्य[1] सत्वरः ॥ २१ ॥

सोऽयमादाय मां तस्मात्प्रयत्नोत्तानितानननम् ।
अङ्गुल्या सदयं कांश्चिदुदबिन्दूनपाययत् ॥ २२ ॥

अङ्गुल्यग्रगतैः कैश्चिदुत्क्षिप्य मम पक्षती ।
आशिञ्चत्सोपसन्नं द्रु शीतलैर्जलशीकरैः ॥ २३ ॥

तत्र विन्यस्य मां रम्ये प्रतीरनलिनीदले ।
हारीतोऽपि ततः स्नात्वा साकं मुनिकुमारकैः ॥ २४ ॥

मामप्यादाय सदयं कथंचिद्वि[2]गतश्रमम् ।
सार्धं मुनिकुमारैस्तैराश्रमाभिमुखं ययौ ॥ २५ ॥

अनेकैर्मुनिभिर्दिव्यैरनूचानैर्निरन्तरम् ।
अपश्यमाश्रमं शान्तं ब्रह्मलोकमिवापरम् ॥ २६ ॥

वर्धितान् वटुभिर्बालान् बद्धाधारान्महीरुहान् ।
सिञ्चन्ति शीकरैर्यत्र हस्तमुक्तैर्मतङ्गजाः ॥ २७ ॥

पक्षोध्दूननसम्भूतैः पवनैः प्रचलाकिनः ।
सन्धुक्षयन्ति वैतानं यत्र वैश्वानरत्रयम् ॥ २८ ॥

---

1. मानाय इति मातृका ।    2. विगताश्रमम् इति मातृका ।

२८. प्रचलाकः शिखण्डः एषामस्ति इति प्रचलाकिनो मयूराः । "प्रचलाकः शराघाते शिखण्डे च भुजङ्गमे" इति मेदिनी ।

"लघुमासो मयूरस्तु चन्द्रकीचित्रमेखलः ।
प्रचलाकः शिखाराज्ञः शिखबलगरव्रती"



घृतकृष्णाजिना यत्र होमधूमैर्महीरुहाः ।
तापसा इव लक्ष्यन्ते जटावल्कलधारिणः ॥ २९ ॥

आगुल्फलम्बिनीः पक्वनीवारकणिशप्रभाः ।
तपोवह्नेरिव ज्वालाः (ता) बिभ्राणमग्रे मुखाः ॥ ३० ॥

बिसतन्तुसितच्छायां पट्टोर्णापरिकल्पिताम् ।
उपवीतपदन्यस्तां दधानामवसक्थिकाम् ॥ ३१ ॥

तपोधनैः परिवृतं जाबालिं मुनिपुङ्गवम् ।
प्रजापतिमिवापश्यं वृतं चित्रशिखण्डिभिः ॥ ३२ ॥

हारीतो मां च विन्यस्य तलाशोकतरोरधः ।
अभिवाद्य पितुः पादावध्यवात्सीत्कुशासनम् ॥ ३३ ॥

दृष्ट्वा मां मुनयः सर्वे कुतोऽयं स्वीकृतस्त्वया ।
इत्यपृच्छंस्तमासीनमगदीत्स च तान् पुनः ॥ ३४ ॥

इतः स्नातुं गतेनायं पतितः शाल्मलीतरोः ।
सन्दिग्धजीवितः श्रान्तः परमासादितो मया ॥ ३५ ॥

यावदुद्भिन्नपक्षोऽयं वियदुत्पतितुं क्षमः ।
तावत्संवर्धितोऽस्माभिः प्राणान् धारयितुं प्रभुः ॥ ३६ ॥

ततः स्वच्छन्दतोऽन्यत्र गमिष्यत्ययमन्यथा ।
अस्मिन् परिचयाद्वस्तु वाञ्छा स्यादत्र वत्स्यति ॥ ३७ ॥

---

1. तावत्संवर्धितोऽभिः इति मातृका ।

---

३२. चित्रशिखण्डिनो महर्षयः सप्त यथाः—

"मरीचिरङ्गिरा अत्रिः पुलस्त्यः पुलहः क्रतुः
वसिष्ठश्चेति सप्तैते ज्ञेयाश्चित्रशिखण्डिनः" (वाचस्पत्ये)

एवं वदति हारीते जाबालिश्च विलोक्य माम् ।
स्वस्यैवाविनयस्यानुभूयते फलमित्यशात् ॥ ३८ ॥

सा तापससमज्या तच्छ्रुत्वा सञ्जातकौतुकम् ।
त्रिकालज्ञाननिपुणं जाबालिमिदमब्रवीत् ॥ ३९ ॥

भूतंभाविभवद्वृत्तं कृत्स्नं दिव्येन चक्षुषा ।
हस्तमौक्तिकवत् द्रष्टुं त्वमेव भगवान् प्रभुः ॥ ४० ॥

इह वाऽमुत्र वानेन कीदृशोऽविनयः कृतः ।
विमर्थं वेति तत्सर्वमावेदयितुमर्हसि ॥ ४१ ॥

इति निर्बन्धतः पृष्टः तया परिषदा मुनिः ।
आबभाषे पुनरिदं वाक्यं वाक्यविदां वरः ॥ ४२ ॥

वक्तव्यमिदमाख्यानमल्पशेषं च वासरम् ।
सन्ध्यावन्दनकालोऽयं भवतामतिवर्तते ॥ ४३ ॥

अस्मिन् जनुषि वान्यस्मिन्यदनेन कृतं यथा ।
कृताशनानां तद्रात्रौ वक्ष्यामि भवतामहम् ॥ ४४ ॥

इत्युक्त्वा सहसोत्थाय सार्धं सर्वैर्महर्षिभिः ।
अपराह्णोचितं कृत्यं यथाविधि चकार सः ॥ ४५ ॥

ततः पश्चिमपाथोधौ पपात रविमण्डलम् ।
वरुणानीकरभ्रष्टमाणिक्यचषकोपमम् ॥ ४६ ॥

अस्ताद्रिसानुपर्यस्तमर्कबिम्बं विदिद्युते ।
वासुकेर्मथनक्षोभात् [1]फणारत्नमिव च्युतम् ॥ ४७ ॥

पाटलं भास्वतो बिम्बं लग्नमर्णस्युदन्वतः ।
हरिवक्षःस्थलासक्तकौस्तुभश्रियमाहरत् ॥ ४८ ॥

1. सदारत्न इति मातृका ।

पश्चिमां हरितं प्राप्य हरिदश्वोऽनुरक्तवान् ।
इतीवमत्सरात्सद्यो[1] दिनश्रीर्विलयं ययौ ॥ ४९ ॥

अर्यम्णि मग्ने पाथोधावन्धकारो व्यजृम्भत ।
अङ्गारे पतिते तोये धूमराशिरिवोत्थितः ॥ ५० ॥

भास्वत्पतनवेगोत्थाः शीकरा इव वारिधेः ।
निलीना निर्मलाकाराः पुस्फुरुस्तारका दिवि ॥ ५१ ॥

अथोदिते निशानाथे कृताहारो मया सह ।
हारीतो मुनिभिश्चान्यैः पितुरभ्यासमभ्यगात् ॥ ५२ ॥

तत्र वेत्रासनासीनं पितरं प्रणिपत्य च ।
आसन्नवर्तिनीं कांचिदध्युवास बृसीमसौ ॥ ५३ ॥

ततः क्षणमिव स्थित्वा चोदितोऽन्यैर्महर्षिभिः ।
हारीतस्तं सविनयं जाबालिमिदमब्रवीत् ॥ ५४ ॥

तातेयं तापससभा श्रोतुमुत्कण्ठते कथाम् ।
इत्युक्तस्तेन जाबालिर्[2]वक्तुं प्रक्रमते स्म ताम् ॥ ५५ ॥

यद्यस्ति वाञ्छा वः श्रोतुमादितः श्रूयतामिति ।
कथां मदीयां जाबालिर्वक्तुं प्राक्रमत क्रमात् ॥ ५६ ॥

अस्त्यवन्तिषु विख्याता विभवोज्जयिनी पुरी ।
अवतीर्णा दिवो दिव्या नगरीव महीतलम् ॥ ५७ ॥

कैलासवासमुज्झित्वा यतीनामिव मानसे ।
महाकालाह्वयो यत्र स्वयं निवसतीश्वरः ॥ ५८ ॥

---

1. त्सद्यः .... .... .... .... .... ॥ इति मातृका ।
2. जाबालि .... तेस्म ताम् ॥ इति मातृका ।

यत्सौधभाजामालोक्य लावण्यं हरिणीदृशाम् ।
विलक्षिता इव व्योम्नि स्थातुं शक्ता न विद्युतः ॥ ५९ ॥

स्फाटिके चत्वरे मुग्धास्तारकाः प्रतिबिम्बिताः ।
मुक्ताफलधिया यत्र गृह्णन्ति सकुतूहलम् ॥ ६० ॥

यत्रोपहारपद्मानि बिम्बितानि मुखान्यपि ।
विभक्तुं नेशते स्त्रीणां मधुपा मणिमण्टपे ॥ ६१ ॥

चन्द्रमा यत्र माणिक्यस्तम्भेषु प्रतिबिम्बितः ।
स्त्रीभिर्बद्ध इवाभाति मुखकान्तिप्रमोषणात् ॥ ६२ ॥

यत्र हर्म्यजुषां स्त्रीणां मुखपद्मैः पराजितः ।
नूनं लक्ष्मच्छलेनेन्दुर्धत्ते दास्याक्षरं हृदि ॥ ६३ ॥

माणिक्यकलशैर्दीप्तैः प्रासादशिखरस्थितैः ।
युगपत् द्वादशादित्या यत्र नित्यमिवोदिताः ॥ ६४ ॥

यत्र गोपुरकूटस्थपद्मरागांशुपाटलम् ।
आसाद्यापि नभोमध्यं बिम्बं बालयते रवेः ॥ ६५ ॥

यद्गोपुराग्रप्रत्युप्तमहानीलप्रभाहताः ।
शारदाभ्रा तटिद्भन्तः प्रयान्ति प्रावृषेण्यताम् ॥ ६६ ॥

ससर्वमङ्गला कामं भूतिमत्यधिकोज्ज्वला ।
या भोगिभूषिता भाति शम्भोर्मूर्तिरिवापरा ॥ ६७ ॥

पौरैरयोध्या भवति विशाला विभवैर्नवैः ।
या भोगिभिर्भोगवती मनोज्ञैर्मधुरा गृहैः ॥ ६८ ॥

[1]समग्रगुणसम्पूर्णो तारापीडो महीपतिः ।
अध्युवास पुरीमेनां मघवेवामरावतीम् ॥ ६९ ॥

1. समग्रहणसम्पूर्णां इति मातृका ।

सकर्दमामादिमकोल्दन्ष्ट्रां
भुग्नां परित्यज्य भृशं कठोराम् ।
चिराय रेमे यशसावदात
मध्यास्य यद्दोःशिखरं [1]धरित्री ॥ ७० ॥

रक्ताङ्गुलिश्रेणि[2]मनोज्ञपत्र
नखप्रभाकेसरजालयुक्तम् ।
उत्तंसयन्ति स्म विपक्षभूपा
यत्पादपद्मं प्रणतैः शिरोभिः ॥ ७१ ॥

आयोधने यस्य कृपाणवल्ली
लग्नाधिकण्ठं रुरुचे रिपूणाम् ।
पतिंवराणां सुरसुन्दरीणां
स्वयंवरेन्दीवरमालिकेव ॥ ७२ ॥

श्यामासियष्टिस्समरे दधाना
छायाच्छलाच्छात्रवमातपत्रम् ।
कृतोद्यमा यस्य जयाय रेजे
कालीव सन्नद्ध[3]करोटिमाला ॥ ७३ ॥

कृपाणिका यस्य रणे विधूता
भुजेन रत्नाङ्गदभूषणेन ।
पराक्रमं दुष्प्रसहं विलोक्य
श्लाघाशिरःकम्पवतीव रेजे ॥ ७४ ॥

1. धरित्रीम् इति मातृका ।
2. श्रोणि इति मातृका ।
3. करोटि इति मातृका ।

द्विषां पुरीतल्लतयोपवीती
रक्ताज्यधारा विहितानुलेपः[1] ।
प्राणान् प्रतापज्वलने जुहाव
रणाध्वरे यस्य कृपाणयज्वा ॥ ७५ ॥

यस्य प्रतापाग्निरुदग्र[2]कीर्ते
स्समेधमानस्समराङ्गणेषु ।
वरोत्सुकानाममराङ्गनानां
प्रायेण कामानलतां प्रपेदे ॥ ७६ ॥

यस्य प्रतापज्वलनेन कामं
पराजितो बाडबजातवेदाः ।
अद्यापि पाथोनिधिमध्यवर्ती
नूनं तपः सञ्चरतीति मन्ये ॥ ७७ ॥

सुधांशुना स्वस्तटिनीजलेन
प्रायः शिवायाः परिरम्भणेन ।
यस्य प्रतापानलतप्तगात्रः
शिवोऽपि चक्रे शिशिरोपचारम् ॥ ७८ ॥

विद्युन्नटीवाधिकचञ्चलापि
प्रतापतापादिव तप्तदेहा ।
हरिप्रतापस्य सितातपत्रच्छायां
जहौ यस्य न राजलक्ष्मीः ॥ ७९ ॥

प्रतापसप्तार्चिषि यस्य राज्ञो
जगत्त्रयस्यापि विवर्धमाने ।

1. लेपा इति मातृका । 2. उदग्रकीर्तिः इति मातृका ।

प्रकाममुष्णालुरिवाब्धिशेते
पय.पयं धिं भगवान् मुकुन्दः ॥ ८० ।

यस्यामिता कीर्तिरुदारकीर्ते
र्माति स्म लोकत्रितये मितेऽपि ।
आदर्शबिम्बे महती गजस्य
मूर्तिः प्रसन्ने प्रतिबिम्बितेव ॥ ८१ ॥

कुलाद्रिकुञ्जेषु विहारिणीनां
प्राणेश्वरैः किन्नरसुन्दरीणाम् ।
क्षौमे हृते सत्यपि यस्य कीर्ति
स्तिरश्चकार ह्रियमाकुलानाम् ॥ ८२ ॥

विधातृमण्डेन्दुकलास्थिमाल्य
मन्दाकिनीभस्मरुचिच्छलेन ।
यत्कीर्तिपूरेण महेश्वरोऽपि
नितान्तमात्मानमलञ्चकार ॥ ८३ ॥

भिक्षाशनानां धृतकर्पराणां
चर्माम्बराणां च सदाशिवानाम् ।
प्रत्यर्थिनां यस्य यशःप्ररोहैः
कैलासतां भूमिधरास्समीयुः ॥ ८४ ।

कुलाद्रिकूटे लिखितं गुणज्ञैः
विद्याधरैः पर्वतधातुरागैः ।
सकौतुकं यस्य भुजापदान
मवाचयन्नप्सरसां कुलानि ॥ ८५ ॥

हृतोष्ठरागाणि गताञ्जनाक्ष्ण्युपात्तनिःश्वासपरम्पराणि ।
प्रियोपभोगेन विनापि वीरश्चकार यः शत्रुवधूमुखानि ॥ ८६ ॥

यस्मिन् महीं पालयति क्षितीन्द्रे
भुजेन भोगीश्वरभोगभासा ।
प्रत्यर्थिनः केवलमर्थिनश्च
देहीति वार्ता न बभूव भूमौ ॥ ८७ ॥

अग्रे मघोनः सुरसुन्दरीभि-
स्सङ्गीयमानस्वभुजानुभावः ।
दोष्णा स रत्नाकरमेखलाया
धुरं धरित्र्या बिभराम्बभूव ॥ ८८ ॥

विचक्षणस्तस्य नरेश्वरस्य
समस्तकार्याम्बुधिकर्णधारः ।
पुरन्दरस्येव गुरुर्बभूव
मन्त्री प्रधानं शुकनासनामा ॥ ८९ ॥

तस्मिन् महीभारमसौ निवेश्य
सामन्तचूडामणिचुम्बिताङ्घ्रिः ।
रेमे युवान्तःपुरसुन्दरीभिः
यथा पुमान् गोपवधूभिराद्यः ॥ ९० ॥

८७. प्रत्यर्थिनः शत्रोः देही देहधारिणीति वार्ता न बभूव । अर्थिनो याचकस्य देहि प्रयच्छ इति वार्ता न बभूव । सर्वेऽपि शत्रवो हताः, सर्वेऽपि याचकाः पूर्णमनोरथा इति यावत् ।

न नाम कामं परमार्थतोऽपि
विलासवत्यप्रतिमानुभावा ।
महीपतेस्तस्य बभूव पत्नी
पुरन्दरस्येव पुलोमपुत्री ॥ ९१ ॥

अकृत्रिमप्रेमरसानुविद्धा
वन्योन्यमानन्दपयोधिमग्नौ ।
तौ दम्पती कैश्चिदहोभिरेव
सञ्जातसौहार्दसुखावभूताम् ॥ ९२ ॥

नरपतिरपि रेमे मन्त्रिनिक्षिप्तकार्यः
क्षणविरहविहीनः कान्तया राजपुत्र्या ।
अयमपि शुकनासः प्रज्ञयायासहीनं
गुरुतरमपि सर्वं राज्यभारं बभार ॥ ९३ ॥

इति श्रीमत्सकलविद्याधरचक्रवर्तिचरणारविन्दशेखरस्य
श्रीराजराजसूनोः त्रिविक्रमस्य कृतौ कादम्बरी-
कथासारसङ्ग्रहाख्ये काव्ये तृतीयः
सर्गः समाप्तः ।



# अथ चतुर्थः सर्गः

अथ देव्या तया साकं रममाणो महीपतिः ।
कञ्चित्कालं निनायासौ पद्माक्ष इव पद्मया ॥ १ ॥

पतिः प्रजानामात्मानमवरोधेषु सत्स्वपि ।
तया च वसुमत्या च कलत्रिणममन्यत ॥ २ ॥

तयोर्निरङ्कुशं प्रेम परस्परमवर्धत ।
वियोगवार्ताविभ्रमविनिःसहं[1] चक्रयोरिव ॥ ३ ॥

एकदाश्रुमुखीं देवीं ददर्श धरणीपतिः ।
हिमोदकाप्लुताम्भोजां पद्मिनीमिव भानुमान् ॥ ४ ॥

तां दृष्ट्वा दीनवदनामश्रुपर्याविलेक्षणाम् ।
तन्निदानानभिज्ञानादन्तस्तापमवाप सः ॥ ५ ॥

पर्यङ्किकायां शनकैराचारार्थं समुत्थिताम् ।
निवेश्य तां नृपः पश्चात्तया निविविशे सह ॥ ६ ॥

कराम्बुजेन नासाग्रे लुठन्तं बाष्पशीकरम् ।
प्रमार्जयन् शुचो हेतुं प्रियां पप्रच्छ पार्थिवः ॥ ७ ॥

भृशं निःशब्दमधुरं किमर्थं रोदिषि प्रिये !
वद दुःखनिदानं ते समदुःखो भवाम्यहम् ॥ ८ ॥

इति निर्बध्य पृष्टापि नोत्तरं प्रत्यपद्यत ।
चामरग्राहिणी तस्या नृपं मकरिकाऽवदत् ॥ ९ ॥

अद्य देवी महाकालमितोऽभ्यर्चयितुं गता ।
श्रीमहाभारते तत्र वाच्यमानेऽनया श्रुतम् ॥ १० ॥

---

1. समन्योन्यं चक्रयोरिवेति मातृका ।

अपुत्राणां नृणां लोका न संति किल शोभनाः ।
पुन्नाम्नो नरकात्क्रूरात्पुत्रः सन्त्रायते ततः ॥ ११ ॥

एतच्छ्रुत्वा स्वभवनमागत्यात्यन्तदुःखिता ।
नाङ्गीकरोत्याभरणं नाहारमभिनन्दति ॥ १२ ॥

अनर्गलगलद्बाष्पधाराकलुषिताननना ।
सखीभिः सान्त्वनैरुक्ता रोदितीयमनुत्तरा ॥ १३ ॥

इदमेव महीपाल! देव्या रुदितकारणम् ।
इत्थं मकरिका राज्ञे विज्ञाप्य विरराम सा ॥ १४ ॥

तारापीडस्तु तद्वाक्यमाकर्ण्य श्रुतिदुःसहम् ।
शोकशङ्कुनिखातात्मा तस्थौ तूष्णीं क्षणं तदा ॥ १५

देवि! किं क्रियतामत्र दैवाधीनेषु वस्तुषु ।
अलं रुदित्वा नः स्वस्ति भूयो दैवं विधास्यति ॥ १६

विधेहि देवतापूजां भक्तिं गुरुजने कुरु ।
शापानुग्रहणे शक्तान्मुनीनभ्यर्चयादरात् ॥ १७ ॥

आराधिताः प्रयत्नेन भक्तिपूर्वं महर्षयः ।
अभीष्टफलदा रो भक्तानां नात्र संशयः ॥ १८ ॥

राजा बृहद्रथो नाम कौशिकस्य प्रभावतः ।
जरासन्धं महाबाहुं प्रापेति श्रूयते सुतम् ॥ १९ ॥

राजा पङ्क्तिरथो लेभे विभण्डकसुताज्ञया ।
भुजान्नारायणस्येव चतुरश्चतुरान्सुतान् ॥ २० ॥

अन्येऽपि बहवो देवि! सत्यसन्धा महीक्षितः ।
मुनिशुश्रूषया पुत्रानलभन्तामितौजसः ॥ २१ ॥

परिप्लवेक्षणं देवि! लवलीदलपाण्डरम् ।
अहं कदा ते द्रक्ष्यामि मुखं व्यञ्जितदौहृदम् ॥ २२ ॥

अङ्के दधाना तन्वङ्गि! हारिद्रवसने सुतम् ।
द्यौः सबालातपेवार्कं मां कदा नन्दयिष्यसि ॥ २३ ॥

इत्थं निगद्य भूपालः तोयैर्भृङ्गारकस्थितैः ।
देव्याः प्रक्षालयामास मुखमश्रुजलाविलम् ॥ २४ ॥

शोकापनोदनिपुणैर्वचोभिः सान्त्वनान्वितैः ।
अरालकेशीमाश्वास्य निर्जगाम महीपतिः ॥ २५ ॥

ततो मन्दीभवच्छोका सा विलासवती स्वयम् ।
यदुक्तं भूमिपालेन चक्रे तत्सर्वमादरात् ॥ २६ ॥

माहेयीः शृङ्गखुरयोर्निबद्धाः कनकेन सा ।
नित्यं घटोध्नीः प्रददौ ब्राह्मणेभ्यः सतर्णकम् ॥ २७ ॥

शिरीषमृद्वी शेते स्म स्थण्डिले केवलेऽपि सा ।
रात्रावनाविले व्योम्नि चन्द्रलेखेव शारदी ॥ २८ ॥

अकस्माज्जनुषां वाचामर्थानामप्यगोचरम् ।
एणाङ्कचूडमेणाक्षी निदध्यौ निस्पृहेक्षणा ॥ २९ ॥

एवं दिनेषु गच्छत्सु केषु चित्पुत्रकाङ्क्षया ।
काचित्त्रियामा यामार्धशेषासीन्मेदिनीपतेः ॥ ३० ॥

---

२४. भृङ्गारकः = स्वर्णपात्रम् ( मयूरकण्ठसदृशकण्ठविशिष्टम् )

२७. माहेयी = धेनुः घट इव ऊधः यासां ताः घटोघ्न्यः ताः । तर्णकः = सद्यो जातः वत्सः ।

२८. स्थण्डिले = आस्तरणशून्ये भूतले ।

3

हर्म्यवातायनस्थायाः राजा देव्या मुखाम्बुजम् ।
स्वप्ने विशन्तमद्राक्षीच्चन्द्रं सम्पूर्णमण्डलम् ॥ ३१ ॥

प्रबुध्यात्यन्तहृष्टात्मा तारापीडोऽपि तत्क्षणम् ।
आहूय शुकनासाय स्वप्नं तमगदच्छुभम् ॥ ३२ ॥

शुकनासः सुखोदर्कमाकर्ण्य स्वप्नमद्भुतम् ।
तारापीडं धरापालमिदं प्रत्यब्रवीद्वचः ॥ ३३ ॥

सत्पुत्रवदनांभोजसन्दर्शनमहोत्सवम् ।
अचिरादेव देव! त्वं सत्यमासादयिष्यसि ॥ ३४ ॥

मयाद्य दिव्यरूपेण पुण्डरीकं द्विजन्मना ।
उत्सङ्गे निहितं स्वप्ने मद्ब्राह्मण्या विलोकितम् ॥ ३५ ॥

निशावसाने संदृष्टाः स्वप्नाः सद्यःफला यतः ।
प्राचीव तपनं देवी कुमारं जनयिष्यति ॥ ३६ ॥

हस्ते गृहीत्वा स्नेहात्तं प्रविश्याभ्यन्तरं द्रुतम् ।
ताभ्यामानन्दयांचक्रे स्वप्नाभ्यां महिषीं नृपः ॥ ३७ ॥

अथ देवी महाकालवासिनः पुरशासिनः ।
अनुग्रहवशात्तस्मिन्काले धत्तेस्म दौहृदम् ॥ ३८ ॥

गर्भच्छलेन भूपालं सा विलासवती दधौ ।
पद्मिनी प्रतिमाव्याजात्प्रसन्नेव प्रभाकरम् ॥ ३९ ॥

तथाभूतां विलोक्यैनामथान्तःपुरिको जनः ।
इङ्गितज्ञो विदामास जातदौहृदलक्षणाम् ॥ ४० ॥

---

३३. सुखं उदर्के आगामिनि काले यस्य तत् ।

प्रधानभूता सर्वान्तःपुराणां कुलवर्धना ।
राज्ञे विज्ञापयामास देवीं सञ्जातदौहृदाम् ॥ ४१ ॥

तया निगदितां वाचममृतादपि शीतलाम् ।
सतृष्ण इव भूपालः श्रवणाञ्जलिना पपौ ॥ ४२ ॥

आविःस्मितानतांभोजः कुलवर्धनयोदिताम् ।
शुकनासाय तां प्रीतिं जगाद जगतीपतिः ॥ ४३ ॥

स च तां वाचमाकर्ण्य जगदाह्लादकारिणीम् ।
अङ्गैस्त्पुलकैर्मातु स्वाशये नाशकन्मुदम् ॥ ४४ ॥

नृपतिः शुकनासेन सह पत्नीं व्यलोकयत् ।
बृहस्पतिसमायुक्तः पौलोमीमिव वासवः ॥ ४५ ॥

सायं संप्रोप्य हृष्टात्मा मन्दिरं प्रति मन्त्रिणः ।
तारापीडस्तया तत्र तां निशामत्यवाहयत् ॥ ४६ ॥

ततः शनैर्वर्धमानगर्भभारालसा भृशम् ।
पीततोयेव मेघाली मन्दमन्दं चचार सा ॥ ४७ ॥

दधती सत्यपि सुतं धरणीधारणक्षमम् ।
नासहिष्टोरसा हारमित्येतत्परमद्भुतम् ॥ ४८ ॥

बहिर्गतेन यशसा गर्भस्थस्येव भूभुजः ।
तदाननमभूत्कान्तं शरकाण्डविपाण्डरम् ॥ ४९ ॥

निस्तीर्य गर्भजं दुःखं कला चान्द्रीव शारदी ।
अवापानुकूलं पुष्टिमङ्गैरम्बुजलोचना ॥ ५० ॥

छन्नसूर्यामिवाभ्रालीमन्तरग्निमिवारणिम् ।
गूढसिंहामिव गुहां ससत्त्वांताममंस्त सः ॥ ५१ ॥

[1]क्षीणमसद्भयान्मध्यमद्य वृद्धं महाश्रयात् ।
इति तस्यास्तनमुखं मन्ये कार्ष्ण्यमुपागतम् ॥ ५२ ॥

सम्पूर्णनाभिकुहरं प्रणश्यत्त्रिवलीपदम् ।
व्यक्तरोमलतं चासीदुदरं हरिणीदृशः ॥ ५३ ॥

प्राप्ते विजनने पुत्रं सुमनःप्रीतिकारणम् ।
जैवातृकं त्रियामेव जैवातृकमसूत सा ॥ ५४ ॥

शुद्धं व्योम पयः स्वच्छं दीप्तोऽग्निः पवनो मृदुः ।
अपांसुलाभूर्भूतानि शंसन्ति स्म शुभं तदा ॥ ५५ ॥

सितोत्तरच्छदे रम्ये शयनीये स बालकः ।
कलशाब्धौ कलामात्रः कलानिधिरिवाबभौ ॥ ५६ ॥

विनयेनेव सद्विद्या सन्दर्भेणेव शारदा ।
विक्रमेणेव वीरश्रीर्सिंहराज सुतेन सा ॥ ५७ ॥

ततः प्रववृते तत्र पुत्रजन्ममहोत्सवः ।
दिव्यदुन्दभिनिध्वानमुखरीकृतदिङ्मुखः ॥ ५८ ॥

जनाय शंसते सूनोर्जन्म शुद्धान्तवर्तिने ।
पूर्णपात्रं नृपः सर्वं ददौ पूर्णमनोरथः ॥ ५९ ॥

राजा पुत्रमुखाम्भोजसन्दर्शनकुतूहलात् ।
सुवर्णपीठादुत्तस्थौ मेरोरिव दिवाकरः ॥ ६० ॥

---

1. क्षीणमसद्भरान्मध्य मदावृत्तं महाश्रयादिति मातृका ।

---

५४. विजननं जननकालः । सुमनसो देवताः विद्वांसश्च । जैवातृकं चन्द्रमसं दीर्घायुषञ्च ।

५६. कलशाब्धौ क्षीरसागरे ।

समस्तरक्षासहितपुत्रजन्मोत्सवोत्तरम् ।
विवेश शुकनासेन सूतिकासदनं नृपः ॥ ६१ ॥

ददर्श दयितोत्सङ्गशायिनं पुत्रमीश्वरः ।
दिवसो बालमादित्यं प्राचीमूलगतं यथा ॥ ६२ ॥

सतृष्ण इव पुत्रस्य मुखमव्याजकोमलम् ।
निर्निमेषेण नेत्रेण नितरां नृपतिः पपौ ॥ ६३ ॥

अवलोक्य मुखं सूनोररविन्दायतेक्षणम् ।
पितॄणां बन्धनान्मुक्तः प्रेमबन्धमवाप सः ॥ ६४ ॥

जयन्तेनेव देवेन्द्रं षण्मुखेनेव शङ्करम् ।
आत्मानं तेन पुत्रेण पुत्रवन्तममंस्त सः ॥ ६५ ॥

नेत्रेण शुकनासोऽथ निश्चलस्निग्धपक्ष्मणा ।
कुमारं प्रत्यवयवं विलोक्य नृपमब्रवीत् ॥ ६६ ॥

शङ्खमत्स्यरथाश्वाब्जपूर्णकुंभध्वजाङ्कितौ ।
सुभगौ पश्य भूपाल! पाणी पल्लवकोमलौ ॥ ६७ ॥

लक्षणैर्देव! सम्पन्नः कुमारोऽयमनुत्तमैः ।
भोक्ष्यतेऽष्टादशद्वीपामेकच्छत्रां वसुन्धराम् ॥ ६८ ॥

शुकनासे वदत्येवं प्रहृष्टः कोऽपि पूरुषः ।
व्यज्ञापयन्महीपालं प्रणिपत्य च पादयोः ॥ ६९ ॥

मनोरमायां ब्राह्मण्यां शुकनासस्य धीमतः ।
आमोद इव मञ्जर्यामद्य जातः सुतो नृप ॥ ७० ॥

एवमाकर्ण्य तद्वाक्यममृतद्रवसोदरम् ।
परं हर्षितमासीत्तदङ्गमाशु महीभुजः ॥ ७१ ॥

अद्य मे सफलं जन्म सफला ब्राह्मणाशिषः ।
प्रसन्नो भगवानद्य भक्तिगम्यो महेश्वरः ॥ ७२ ॥

इत्युक्त्वा सहसाश्लिष्य शुकनासं प्रियोत्तरम् ।
तदुत्तरीयमाकृष्य तस्मै प्रादान्नरोत्तमः ॥ ७३ ॥

प्रभाविस्मीरितं दिव्यमनर्घमणिकङ्कणम् ।
(उन्मुच्यप्र) ददौ तस्मै स्वकरस्थं महीपतिः ॥ ७४ ॥

शुकनासगृहं गत्वा पौरजानपदान्वितम् ।
अकारयन्नृपःस्नेहादुत्तरोत्तरमुत्सवम् ॥ ७५ ॥

अथ प्रातेऽह्नि दशमे मुहूर्ते शुभशंसिनि ।
कृत्वा ब्राह्मणसाद्रत्नं गाः सुवर्णं च कोटिशः ॥ ७६ ॥

चन्द्रापीडप्रसादेन लब्धमात्मभवं नृपः ।
चन्द्रबिम्बाननं नाम्ना चन्द्रापीडं चकार तम् ॥ ७७ ॥

शुकनासः क्रियाः कृत्वा समस्ताः श्रुतिचोदिताः ।
वैशम्पायन इत्येवं चक्रे नामात्मजन्मनः ॥ ७८ ॥

इति मनुजपतिः प्रपूर्णकामः
सुतपरिवर्धनजागरूकचेताः ।
अगणितबलवैरिराज्यलाभः
कतिचिदहान्यतिवाहयांबभूव ॥ ७९ ॥

इति श्रीमत्सकलविद्याधरचक्रवर्तिचरणारविन्दशेखरस्य राजराजसूनोः त्रिविक्रमस्य कृतौ कादम्बरीकथा-सारसंग्रहाख्ये काव्ये चतुर्थः सर्गः

## पञ्चमः सर्गः

मातुर्मनोरथेनैव स्नेहेन जनकस्य च ।
भयेन सह शत्रूणामथ संववृधे सुतः ॥ १ ॥

प्रशस्तलग्ने दिवसे सूनोः स्वविभवोचितम् ।
राजा प्रकृतिभिः सार्धं चक्रे चौलं यथाविधि ॥ २

कुमारस्य ततो राजा विद्यागृहमुदारधीः ।
बहिर्नगरमुत्सालमनुसिप्रमकारयत् ॥ ३ ॥

विद्याविनयशालिभ्यो गुरुभ्यः शोभने दिने ।
अर्पयामास राजा तं वैशम्पायनपूर्वकम् ॥ ४ ॥

[1]पञ्चाशदक्षरमयीं मातृकां मन्त्ररूपिणीम् ।
चन्द्रापीडो गुरुमुखाद्विवेद विनयान्वितः ॥ ५ ॥

चतुर्दशसु विद्यासु चतुःषष्ट्यां कलासु च ।
प्रतिष्ठां परमां लेभे लक्ष्यलक्षणयोश्च सः ॥ ६ ॥

कुशाग्रतीक्ष्णया बुद्ध्या गुरौ भक्त्यानृपा[1]त्मजः ।
पदवाक्यप्रमाणेषु परं पारङ्गतोऽभवत् ॥ ७ ॥

चलणं कक्ष्यया बध्वा चण्डिकामभिवाद्य च ।
पुरस्कृत्य गुरोराज्ञामस्त्रयोग्यां चकार सः ॥ ८ ॥

मरीचिकां विवेदासौ तथा वैतालिकीमपि
अङ्गीचकार भूपालीमपि भृङ्गिमतं तथा ॥ ९ ॥

1. पञ्चदशाक्षर इति मातृका ।

१. निजात्मजः इति मातृका

मुष्टिना लक्ष्माच्छाद्य बाणाग्रनिहितेक्षणः ।
आकर्णपूरमाकृष्य स जहौ कटकामुखम् ॥ १० ॥

गृहीत्वा मस्तके कृत्वा भुजां कल्बुषशालिनीम् ।
आकृष्याकम्पमभिनन्निमित्तं निश्चलेक्षणः ॥ ११ ॥

कुण्डलीकृतकोदण्डः शरेणैकेन चञ्चलः ।
युगपत्सप्तघटिका बिभेद नृपनन्दनः ॥ १२ ॥

[1]दृष्ट्वाम्बु दूरचित्रेपुलक्ष्यवेधेऽपि शिक्षितः ।
पृथिव्यां प्रथितां कीर्तिं स जिगाय किरीटिनः ॥ १३

अचिरेणैव कालेन स्वशक्त्या शिक्षयापि च ।
अद्वितीयो भवत्कामं त्रिविधेष्वायुधेषु सः ॥ १४ ॥

तुरङ्गमं समारुह्य बाह्यालीमवगाह्य च ।
धाराः सञ्चारयामास कुमारः पञ्चधा स्मृताः ॥ १५ ॥

बाह्यालिमिव भूचक्रं सारणीमिव सागरम् ।
अमंस्तवाहमारुह्य स कुड्यमिव पर्वतान् ॥ १६ ॥

शिक्षयापि च शास्त्रेषु शस्त्रेष्वपि स योग्यया ।
अहंक्रियां तिरश्चक्रे विदुषां विद्विषामपि ॥ १७ ॥

1. दृष्ट्वाम्बुदूरचित्रेषु इति मातृका

१५. "अश्वानां तु गतिर्धारा विभिन्ना सा च पञ्चधा ।
आस्कन्दितं धौरितकं रेचितं वल्गितं प्लुतम् ॥"

इति वैजयन्त्याम् ।

"गतिः पुला चतुष्काच तद्वन्मध्यजवापरा ।
पूर्ववेगा तथा चान्या पंचधाराः प्रकीर्तिताः ॥"

इत्यश्वशास्त्रे ।

शास्त्रेष्वपि च सर्वेषु शस्त्रेषु सकलेषु च ।
अन्वकार्षीत्कुमारस्य स वैशम्पायनोऽपि च ॥ १८ ॥

सह संवर्धनेनापि सहसक्रीडनेन च ।
चन्द्रापीडस्य सञ्जातः द्वितीयं हृदयं हि सः ॥ १९ ॥

अनङ्गमङ्गलागारं शृङ्गारकुलदैवतम् ।
यौवनं ललिताकारः स प्रपेदे शनैः शनैः ॥ २० ॥

युगदीर्घौ भुजौ स्कन्धः ककुद्मत्ककुदोपमः ।
वक्षः कवाटकल्पं तत्कुमारः स्फुटयौवनः ॥ २१ ॥

अधीताशेषविद्यं तमेवमारूढयौवनम् ।
चन्द्रापीडं समाकर्ण्य राजा हृष्टतमोऽभवत् ॥ २२ ॥

अथाशु तनयं राजा समानेतुं समुत्सुकः ।
बलाहकाख्यमाहूय प्राहिणोद्वाहिनीपतिम् ॥ २३ ॥

स तु विद्यागृहं गत्वा बहिः स्थित्वा निवेद्य च ।
तदाज्ञया प्रविश्यान्तरनंसीत्तं सगौरवम् ॥ २४ ॥

ततः क्षणमिव स्थित्वा तत्समीपे तदाज्ञया ।
बलाहकः सविनयं चन्द्रापीडं व्यजिज्ञपत् ॥ २५ ॥

अधीतानीश ! शास्त्राणि शिक्षिताः सकलाः कलाः ।
सर्वास्वायुधविद्यासु गतोऽसि परमां स्थितिम् ॥ २६ ॥

विद्यागृहादनुमतो निर्गमायासि भूभुजा ।
पञ्जरादिव निर्मोक्तुं किशोरमिव केसरी ॥ २७ ॥

कलाकलापाधिगतं हृदयाह्लादकारिणम् ।
समुत्सुकास्त्वां पश्यन्तु पूर्णचन्द्रमिव प्रजाः ॥ २८ ॥

देवस्येन्द्रायुधो नाम वाजीसागरसंभवः ।
पारशीकाधिपतिना प्रणयात्प्राभृतीकृतः ॥ २९ ॥

जवनं पूर्णसत्वं तमाजानेयं महोत्सवम् ।
लक्षणज्ञाः समालोक्य संस्तुवन्ति सल्लक्षणम् ॥ ३० ॥

एवं लक्षणसंपन्नं हयरत्नमयोनिजम् ।
देवेन प्रहितः सोऽयं कुमार! द्वारि तिष्ठति ॥ ३१

एवंविधो न भूतो वा न भावी च तुरङ्गमः ।
औपवाह्यपदे सोऽयं कुमारेणानुगृह्यताम् ॥ ३२ ॥

राजपुत्रा महाराजप्रेषितास्त्वद्दिदृक्षया ।
बहिः कुमार! तिष्ठन्ति विद्याविक्रमशालिनः ॥ ३३

बलाहके वदत्येवं गुर्वाज्ञां शिरसा दधत् ।
आदिदेश प्रवेशाय द्वाःस्थानिन्द्रायुधस्य सः ॥ ३४

ततस्तद्वचनादन्तः प्रविष्टमतिरंहसम् ।
अमांसलास्यमुत्तङ्गप्रोथमुत्फुल्ललोचनम् ॥ ३५ ॥

२९. प्राभृतीकृतः उपायनीकृतः ।

३०. आजानेयः उत्तमकुलीनोऽश्वः ।

३५. अमांसलास्यः निर्मांसवक्त्रः । एतच्च शुभाश्वस्य लक्षणम् ।
तद्यथा नकुलप्रोक्तेऽश्वशास्त्रे —

"आयतं तुरगाणां च निर्मांसं प्रियदर्शनम् ।
सुगंधं पूजितं वक्त्रं ... · ......... ॥" इति ।

(अश्वलक्षणप्रकरणाध्याये श्लो १२)

उत्तुङ्गः प्रोथो यस्य । प्रोथो नाम यथा पूर्वोक्ताश्वशास्त्रे —

"सृक्किद्वयं विजानीयाद्वक्त्रपार्श्वगतं बुधः ।
उत्तरोष्ठः प्रपाणाख्यं तदूर्ध्वं प्रोथ उच्यते ॥" इति ।

(प्रदेशाध्याये श्लो ६)

आयतग्रीवमत्यर्थं मरालमृदुकेसरम् ।
अञ्जनाभं पृथुतरं दधानं खुरमण्डलम् ॥ ३६ ॥

[1]सम्पुटैर्दशभिर्युक्तं वृषभेणाङ्गदेन च ।
रोचमानेन सहितं श्लाघ्यमेखलिकान्वितम् ॥ ३७ ॥

तं शङ्खावर्तशुक्त्याद्यैः सुमनोमणिसंयुतैः ।
पयोनिधिभवं जन्म गृह्णन्तमिव लक्षणैः ॥ ३८ ॥

खलीनवल्ग्याबद्धबाहूनाकृष्य सादिनः ।
आपिबन्तमिवाकाशमायान्तमतिरंहसा ॥ ३९ ॥

---

1. सम्पुटं दशभिर्युक्तमिति मातृका ।

---

३७. वृषभः कर्णमूलस्थः आवर्तविशेषः । यथा पूर्वोक्ते अश्वशास्त्रे —

" आवर्तौ वृषभाख्यौ ज्ञेयौ वृषभस्य कर्णमूलस्थौ ।
ताभ्यां स्वामी विजयी लभतेऽलङ्कारनिकरांश्च ॥

तत्रैव — (आवर्ताध्याये श्लो २८)

" बाह्वोर्यस्यावर्तो शुक्तिर्वा सोऽङ्गदी हयः प्रोक्तः ।
प्राप्नोति तस्य भर्ता रत्नान्याभरणनिकरांश्च ॥ "

(आवर्ताध्याये ४२)

रोचमानोप्यावर्तविशेषः । यथा तत्रैवाश्वशास्त्रे —

आवर्तः कण्ठस्थः शुक्तिर्वा रोचमान इत्युक्तः ।
राज्ञस्तेनाश्वेन कोशो मित्राणि वर्धन्ते पुत्राः ॥

मेखली लक्षणं तत्रैव — (आवर्ताध्याये ३२)

आवर्तो रन्ध्रोपरि यस्यास्त्येष मेखली नाम ।
तेनैश्वर्यं भवति भवन्ति पुत्राश्च पौत्राश्च ॥

३८. शंखावर्तशुक्त्याद्याः देवमणिश्च शुभाश्वस्य लक्षणानि । तत्र देवमणिर्यथा तत्रैव अश्वशास्त्रे —

" आवर्तस्तु निगाले देवमणिः सर्वकामदश्चासौ ।
राष्ट्रसुतकोशसम्पत्सौख्यानि विविधानि विजयं च ॥ "

(आवर्ताध्याये)

अधिकश्रमसञ्जातां दधानं स्वेदविप्रुषम् ।
रत्नाकर[1]जलालग्नां मुक्तामभिनवामिव ॥ ४० ॥

रंहस्विनं हयवरं मनसो मारुतादपि ।
चन्द्रापीडस्तमद्राक्षीद्विस्मयस्तिमितेक्षणः ॥ ४१ ॥

समस्तलक्षणोपेतं दृष्ट्वा तुङ्गं तुरङ्गमम् ।
विस्मितश्चिन्तयामास धीरप्रकृतिरप्यसौ ॥ ४२ ॥

सर्वथा शापजातोऽयं मन्ये देव इति स्फुटम् ।
अवस्थामीदृशीं देवाः श्रूयन्ते हि गता इति ॥ ४३ ॥

रम्भां स्थूलशिरा नाम शशापाप्सरसो मुनिः ।
सा चिरं बडवा भूत्वा शतधन्वानमाश्रिता ॥ ४४ ॥

कुमारश्चिन्तयन्नेवमारुरुक्षुर्हयोत्तमम् ।
भद्रपीठात्समुत्तस्थौ पर्वतादिव केसरी ॥ ४५ ॥

निगालं पाणिनास्फाल्य सादरं प्रणिपत्य च ।
अध्यरुक्षत्कुमारस्तं यथोच्चैःश्रवसं हरिः ॥ ४६ ॥

इन्द्रायुधं समारुह्य चन्द्रापीडो विनिर्गतः ।
अनेकसङ्ख्यमश्वीयं ददर्शाभिमुखागतम् ॥ ४७ ॥

बलाहकेन प्रत्येकं नामग्रहणपूर्वकम् ।
निर्दिष्टा राजपुत्रास्ते चन्द्रापीडमनंसिषुः ॥ ४८ ॥

चन्द्रापीडस्तु तान्सर्वान्सम्मान्य च यथाक्रमम् ।
नगराभिमुखं तूर्णं प्रतस्थे सेनया सह ॥ ४९ ॥

1. जलालग्नां इति मातृका ।

४६. निगालः गलोद्देशः ।

अनेकनिधिसम्पूर्णां पुरीं पुण्यजनाश्रिताम् ।
धनदालङ्कृतां रम्यां अपरामलकामिव ॥ ५० ॥

रम्भासुललितां कामं चित्रलेखामनोरमाम् ।
आश्रितां सुमनोवृन्दैर्दीप्तां देवपुरीमिव ॥ ५१ ॥

नाम्ना न केवलं ख्यातां वीरैरुज्जयिनीं पुरीम् ।
सैन्यैः परिवृतैः प्रापत्कुमारः कुलवर्धनः ॥ ५२ ॥

अपावृतकपाटत्वात्समं सर्वत्र सा पुरी ।
उन्मीलितेक्षणेवासीच्चन्द्रापीडदिदृक्षया ॥ ५३ ॥

चन्द्रापीडं ततो द्रष्टुं सौधमारुरुहुः स्त्रियः ।
सुराङ्गना मरुत्वन्तं सुमेरुशिखरं यथा ॥ ५४ ॥

कस्याश्चिन्मणिसोपाने बिम्बितं मुखमाबभौ ।
कालिन्द्या इव कल्लोले प्रतिमाचन्द्रमण्डलम् ॥ ५५ ॥

मणिवातायनान्तस्थं कस्याश्चिन्मुखपङ्कजम् ।
राहुवक्त्रान्तरगतं रेजे बिम्बं विधोरिव ॥ ५६ ॥

अङ्गवन्तमिवानङ्गमवतीर्णं महीतले ।
सकौतुकमवैक्षन्त चन्द्रापीडं पुराङ्गनाः ॥ ५७ ॥

सुगन्धिनि मुखे तस्य हृदयाह्लादकारिणि ।
दृशो निपेतुर्नारीणां भ्रमर्य इव पङ्कजे ॥ ५८ ॥

५०. पुण्यजनाः सत्पुरुषाः यक्षाश्च । धनदैः = धनिभिरलङ्कृतां, धनदेन = कुबेरेण अलङ्कृतां च ।

५१. रम्भा = कदली, काचित्सुरवेश्या, । चित्रलेखा = रत्नवल्ल्यादिः, तदाख्या काचिदप्सरस्त्री । सुमनसः विद्वांसो देवाश्च ।

कर्णजाहङ्गतेनैव प्रीतिस्निग्धेन चक्षुषा ।
भावमन्तर्गतं तस्य कामिनी काचिदब्रवीत् ॥ ५९ ॥

चन्द्रापीडं समालोक्य काचिदापादशेखरम् ।
इतराणीन्द्रियाण्यैच्छदतृप्ता भवितुं दृशौ ॥ ६० ॥

मनांसि मदिराक्षीणां पश्यन्तीनां सविभ्रमम् ।
च्छायेवादर्शबिम्बानि प्रविष्टाभूत्तदाकृतिः ॥ ६१ ॥

कथाः श्रोत्रसुखाः शृण्वन्स्मरार्तानां मृगीदृशाम् ।
तूर्णं राजकुलं प्राप स वैशम्पायनान्वितः ॥ ६२ ॥

तस्मिन्निन्दीवरश्यामे गते च नृपनन्दने ।
तमेव मार्गमैक्षन्त कामार्ताः कमलेक्षणाः ॥ ६३ ॥

प्राप्य राजकुलद्वारं रथाश्वगजपत्तिमान् ।
पौराभिवन्दितो वाहादवारुक्षन्नृपात्मजः ॥ ६४ ॥

कक्ष्यान्तराण्यतिक्रम्य कमनीयानि कानिचित् ।
आस्थानमण्डपगतं तारापीडं ददर्श सः ॥ ६५ ॥

किरीटबद्धाञ्जलिभिर्भूपालैरभिसेवितम् ।
दूरात्सप्रश्रयं मूर्ध्ना तातं प्रणिपपात सः ॥ ६६ ॥

अथ तं प्रणतं भक्त्या दोर्भ्यां प्रणयपूर्वकम् ।
उध्द्दृत्य च बलाद्गाडमाशिश्लेष नरेश्वरः ॥ ६७ ॥

ततस्तेन समादिष्टः पादपीठस्य सन्निधौ ।
चन्द्रापीडः सविनयं न्यषीदद्धरणीतले ॥ ६८ ॥

आश्लिष्टः पुत्रवत्प्रेम्णा तारापीडेन सादरम् ।
शुकनासस्य पुत्रोऽपि निषसाद महीतले ॥ ६९ ॥

क्षणं निषद्य तत्रैव जनकस्याज्ञया पुनः ।
वत्सलाज्जननीं द्रष्टुं कुमारोऽन्तः पुरं ययौ ॥ ७० ॥

आनन्दबाष्पप्रसरैरापूर्णनयनाम्बुजाम् ।
वात्सल्यनिघ्नहृदयां जनयित्रीं ननाम सः ॥ ७१ ॥

पुत्रं ततः परिष्वज्य प्रणतं प्रस्नुतस्तनी ।
जननी समुपाजिघ्रन्मूर्ध्नि तस्य मुहुर्मुहुः ॥ ७२ ॥

वैशम्पायनमाश्लिष्य प्रवणं विनयाद्भृशम् ।
अङ्कमारोपयामास पुत्रं सा पुत्रवत्सला ॥ ७३ ॥

तत्र नातिचिरं स्थित्वा सर्वाण्यन्तःपुराण्यपि ।
परमानन्दयामास प्रत्येकं दर्शनेन सः ॥ ७४ ॥

निर्गम्य द्वारदेशस्थं आरुह्येन्द्रायुधं पुनः ।
शुकनासमसौ द्रष्टुं तत्पुत्रेण समं ययौ ॥ ७५ ॥

ततः परिवृतं प्राज्ञैः स्नेहात्तातमिवापरम् ।
ववन्दे जातभक्तिस्तं मूर्ध्ना दूराननतेन सः ॥ ७६ ॥

उत्थाय सोऽपि सौवर्णादविलम्बितमासनात् ।
प्रीतिस्निग्धेक्षणो गाढं कुमारं परिषस्वजे ॥ ७७ ॥

स्थित्वा ततः क्षणं तूष्णीं आविःस्मितमुखाम्बुजः ।
शुकनासः सुखासीनं कुमारमिदमब्रवीत् ॥ ७८ ॥

त्वं तातमनुजातोऽसि विद्यया विक्रमेण च ।
तथापि विनयान्नीचैः कुमारः परिदृश्यते ॥ ७९ ॥

इत्युक्त्वा तं समभ्यर्च्य स्वयमाभरणादिभिः ।
परं प्रीतमनास्तूर्णं शुकनासो व्यसर्जयत् ॥ ८० ॥

प्रविश्याभ्यन्तरं दृष्ट्वा वैशम्पायनमातरम् ।
पूर्वं सङ्कल्पितं पित्रा कुमारो भवनं ययौ ॥ ८१ ॥

समस्तमङ्गलोपेतं स्वशय्यागृहमन्तरा ।
इन्द्रायुधस्यावस्थानमकल्पयदरिन्दमः ॥ ८२ ॥

अथास्तं भास्वति प्राप्ते तास्ताः कृत्वोचिताः क्रियाः ।
राजपुत्रैः समं तत्र तां निनाय निशीथिनीम् ॥ ८३ ॥

कृत्वा प्रगेतनं कर्म चन्द्रापीडो यथाविधि ।
जनकेनाभ्यनुज्ञातो मृगयायै वनं ययौ ॥ ८४ ॥

तत्र व्याघ्रकुरङ्गादीन्बहून्विख्यातविक्रमः ।
स ललाटन्तपे पूष्णि हत्वा निववृते वनात् ॥ ८५ ॥

स्नानभोजनकर्माणि कृत्वा कृत्यविदां वरः ।
कुमारः पादचारेण पितरं द्रष्टुमभ्यगात् ॥ ८६ ॥

प्रणम्य पितरं मूर्ध्ना स्थित्वा तत्सविधे क्षणम् ।
कुमारो मृगयोद्भूतां सद्यः श्रान्तिमपाकरोत् ॥ ८७ ॥

अन्येद्युः कन्यया सार्धं कयापि कमनीयया ।
प्राप्तं कैलासनामानं सौविदल्लं ददर्श सः ॥ ८८ ॥

भक्तिपूर्वं प्रणम्याथ कञ्चुकी तं व्यजिज्ञपत् ।
कुमार ! देवी त्वामेवमाज्ञापयति सादरम् ॥ ८९ ॥

कन्येयं पत्रलेखाख्या कुलूताधिपतेः सुता ।
वन्दीजनैः सहानीता वर्धिता च मया चिरम् ॥ ९० ॥

८४. प्रगेतनं = प्रातःकालीनम्
८८. सौविदल्लः = कञ्चुकी ।

इदानीं तव ताम्बूलकरङ्कवहनक्षमा ।
इति सङ्कल्पसञ्जातस्नेहात्संप्रेषिता मया ॥ ९१ ॥

कृपावती कृतज्ञा च कार्यज्ञापि नयान्विता ।
गुणेन सेवया चेयं वत्समाराधयिष्यति ॥ ९२ ॥

इति वादिनि कैलासे कुमारस्तां विलोक्य च ।
तथेत्युक्त्वा च सव्रीडं प्रेषयामास तं पुनः ॥ ९३ ॥

ततः सर्वेषु कार्येषु चन्द्रापीडस्य कन्यका ।
अहोभिरेव सा कैश्चिदयासीदन्तरङ्गताम् ॥ ९४ ॥

यौवराज्याभिषेकार्थं शुकनासस्तमेकदा ।
विनीततरमेवेच्छन् तदात्वोचितमभ्यधात् ॥ ९५ ॥

त्वमेकतानः शृणु वत्स ! वाक्यं
स्वन्तं परं पथ्यमिदं मदीयम् ।
उन्मीलिता येन भवेन्मतिस्ते
शाणोपलेनेव मणिप्रवेकः ॥ ९६ ॥

मनीषिणामप्युपदेशवाक्यैः
शान्तैर्न शान्तिं समुपैति नीचः ।
निर्वापितोप्यम्बुभिरम्बुराशेः
संवर्धते प्रत्युत वाडवाग्निः ॥ ९७ ॥

भवादृशानामुपदेशवाचः
स्वान्तं परित्यक्तमलं श्रुतेन ।

---

९६. मणिप्रवेकः = मणिश्रेष्ठः ।

विशन्त्ययत्नेन परं गुरूणां
भानोरिवाच्छस्फटिकं मयूखाः ॥ ९८ ॥

अप्राप्तकामस्य गुरूपदेशः
सम्यग्विनीतस्य तवाद्य योग्यः ।
कामेषुभिर्मर्मरिते न चित्ते
लगेत्पयोबिन्दुरिवाब्जपत्रे ॥ ९९ ॥

मग्नस्य कन्दर्परसेषु गाढं
संख्यावतामप्युपदेशवाक्यम् ।
मलापहारि श्रवणोदरस्थं
शूलं पयः शुद्धमिवातनोति ॥ १०० ॥

बहुश्रुतस्यापि च यौवनादौ
रागेण पङ्कैरिव शुद्धमम्भः ।
प्रसादमुच्चैः सहजं विहाय
कालुष्यमौपाधिकमेति चेतः ॥ १०१ ॥

करेण तीव्रेण च तिग्मभानो
रत्नप्रभाभिश्च निरन्तराभिः ।
ज्वालाभिरग्नेरपि गाढजातं
तमोऽनपोह्यं किल यौवनादौ ॥ १०२ ॥

सम्प्राप्य सम्यग्भवबन्धभाव-
मविद्ययानन्तमिवाशु चेतः ।
निजं विहायाच्छतरं स्वभावं
प्रयाति मालिन्यमुपाधिसिद्धम् ॥ १०३ ॥

गर्भेश्वरत्वं नवयौवनत्वं
रूपाधिकत्वं च बलोत्तरत्वम् ।
पुंसामिहैकैकमनर्थकारि
सर्वाणि यस्मिन्किमु तस्य तानि ॥ १०४ ॥

गराच्च सम्मोहनशक्तिमुग्रां
रागं च कल्पद्रुमपल्लवेभ्यः ।
मदं च मद्यात्परिगृह्य लक्ष्मीः
प्रमथ्यमानादुदधेस्तदस्थात् ॥ १०५ ॥




भुजैश्चतुर्भिः पुरुषोत्तमेन
मन्थाचलस्य भ्रमितस्य वेगात् ।
आरूढया वासनयेव लक्ष्मी
रद्यापि न भ्रान्तिमहो जहाति ॥ १०६ ॥



लब्ध्वा कचित्प्राक्तनपुण्यलेशै-
र्नीत्यैव सम्यक्परिपालितापि ।
गुणेन बद्धापि दृढं विलोला
तटिल्लतेव प्रपलायते श्रीः ॥ १०७ ॥

विलङ्घयत्युन्नतमत्युदार
माशीविषं क्रुद्धमिवाभिजातम् ।
सरस्वती सक्तमसूययेव
स्वप्नेऽपि नालिङ्गति राजलक्ष्मीः ॥ १०८ ॥

प्रायेण कामं धनिनो धनेषु
तृष्णा परिज्ञानवतोऽपि गुर्वी ।

लक्ष्याय कोटिद्वयसारमत्र
नम्रं धनुः पूर्वनिदर्शनं ते ॥ १०९ ॥

लक्ष्मीपतिस्त्वं चतुरो भुजांस्ते
सञ्छादयन्मानुषतां गतोऽसि ।
एवं स्तुतो वन्दिजनैर्विचिन्त्य
तत्सत्यमन्तःस्मयते हि मूढः ॥ ११० ॥

मदेन चाक्रन्दितलोचनानि
पदे पदे च स्खलिताक्षराणि ।
पश्यन्त्यधन्या धनिनां मुखानि
धन्यास्तु कामेन मृगेक्षणानाम् ॥ १११ ॥

वीचीषु लोलासु च बुद्बुदेषु
देहेष्वनित्येषु च मौक्तिकेषु ।
ज्वालासु लक्ष्मीषु तटिल्लतासु
कः प्रत्ययः प्राज्ञतमस्य पुंसः ॥ ११२ ॥

आहन्त ! यावत्स यदि प्रमाद्ये
दाखण्डलो वा पुरुषोत्तमो वा ।
विश्यानयं मानुषलोकपालः
पदात्क्षणेन च्यवते स्वकीयात् ॥ ११३ ॥

आत्मानमापत्पतितं मनीषी
समुद्धरेज्ज्ञानवतात्मनैव ।
पङ्कप्रलीनं सहसा द्विपेन्द्रं
द्विपेन्द्र एवोद्धरते न चान्यः ॥ ११४ ॥

अकुण्ठकामस्खलितप्रताप:
चिराय पित्रा सह सागरान्ताम् ।
आजानुलम्बेन भुजेन भूमि-
मष्टादशद्वीपवतीं प्रशाधि ॥ ११५ ॥

इति बहुविधं तस्माच्छ्रुत्वोपदेशमुदारधी:
परिणतिसुखं चन्द्रापीड: सकौतुकमादरात् ।
दशमिव दशाहीनो विद्यां परामिव मन्दधी-
र्निधिमिव भृशं रिक्तो लब्ध्वा सहृष्टतमोऽभवत् ॥ ११६ ॥

इति श्रीमत्सकलविद्याधरचक्रवर्तिचरणारविन्दशेखरस्य
राजराजसूनो: श्री त्रिविक्रमस्य कृतौ कादम्बरी-
कथासारसंग्रहाख्ये काव्ये पञ्चम: सर्ग: ।



## षष्ठः सर्गः ।

अथाभिषेकसम्भारं सूनोः कल्पयितुं नृपः ।
अमात्यान् शुकनासाद्यानन्वदिक्षदरिन्दमः ॥ १ ॥

शुभे मुहूर्ते ते सर्वे पुरोधाय पुरोधसम् ।
कुमारस्याभिषेकार्हं चक्रुः कर्म यथाक्रमम् ॥ २ ॥

तीर्थमावर्जयामास पुरोधास्तस्य मूर्धनि ।
हेमकुंभैस्तटित्वद्भिः सुमेरोरिव भानुमान् ॥ ३ ॥

पुरोधसा धर्मविदा मन्त्रपूतेन वारिणा ।
अभिषिक्तः कुमारोऽभादुल्लीढ इव रोहणः ॥ ४ ॥

अभिषेकाद्भृशं दीप्तः स्वबाहुः परिघोपमः ।
विद्दियुतेतरां तस्य निर्मुक्त इव पन्नगः ॥ ५ ॥

पादपं स्वममुञ्चन्ती लते वापरपादपम् ।
अत्यजन्त्यपि तं लक्ष्मीः संचक्राम तदात्मजम् ॥ ६ ॥

तापनीयं ततः पीठमध्युवास नृपात्मजः ।
मण्डलं चण्डमहसः पुराण इव पूरुषः ॥ ७ ॥

नीराजयामासुरमुं रत्नदीपैः पुराङ्गनाः ।
यामिन्यो रजनीनाथं ज्योतिर्भिरुदितैरिव ॥ ८ ॥

युवराजं महीपाला जयन्तं त्रिदशा इव ।
पर्यस्तचूडामणिभिः शिरोभिस्तं ववन्दिरे ॥ ९ ॥

अथ दिग्विजयाशंसी चन्द्रापीडस्य तत्क्षणात् ।
प्रस्थानदुन्दुभिः काममामन्दतरमध्वनन् ॥ १० ॥

दध्वनुर्जयनिःस्वानाः स्वर्णकोणैर्विघट्टिताः ।
विद्युद्दण्डैरभिहता युगान्तजलदा इव ॥ ११ ॥

जयनिःसाणघोषेण रोदः कुहरवर्तिना ।
विष्टपत्रितयं सद्यो बाधिर्यं समुपागमत् ॥ १२ ॥

चन्द्रापीडः समाकर्ण्य प्रयाणपटहध्वनिम् ।
भद्रपीठादरातीनामुच्चचाल श्रिया सह ॥ १३ ॥

निषादाकुञ्चितोर्ध्वाङ्गमारुरोह स कुञ्जरम् ।
इल्वलारातिसंस्तब्धं विन्ध्याद्रिमिव केसरी ॥ १४ ॥

शरदभ्रनिभच्छत्रं तस्योपरि समुद्धृतम् ।
प्रथमाद्रेरिव बभौ पार्वणं चन्द्रमण्डलम् ॥ १५ ॥

तस्यावलोक्य तच्छत्रमनीकः सहसोत्थितः ।
पूर्णचन्द्रमसं दृष्ट्वा यादःपतिरिवाबभौ ॥ १६ ॥

छत्रडिण्डीरषण्डाढ्या कुन्तनीलोत्पलाकुला ।
वाहिनी वाहिनीवाद्रेर्गोपुरान्निर्ययौ शनैः ॥ १७ ॥

प्रसर्पद्भिर्बलभरैः समं सर्वासु दिक्ष्वपि ।
चकम्पिरे भुजङ्गेन्द्रफणाफलकभित्तयः ॥ १८ ॥

रिपुनारीमुखाम्भोजनीहारनिकरोपमः ।
तद्बलोत्थापितो रेणुस्तत्क्षणादुदजृम्भत ॥ १९ ॥

बलानां चतुरङ्गाणां सञ्चारेण समुत्थितः ।
उदेष्यतः प्रतापाग्नेः पांसुर्धूम इवाबभौ ॥ २० ॥

१४. इल्वलारातिः अगस्त्यः १७. छत्रमेव डिण्डीरषण्डं, फेनसमूहः तेन आढ्या कुन्ता एव नीलोत्पलानि तैराकुला वाहिनी नदी – सेना च ।

ब्रह्माण्डमविशद्धूलिर्बलचङ्क्रमणोत्थिता ।
युगान्ते भूतधात्रीव साक्षान्नारायणोदरम् ॥ २१ ॥

पङ्किले स्वर्णदीतोये पांसुना देवयोषिताम् ।
मुखान्याकण्ठमग्नानां पङ्कजत्वं प्रपेदिरे ॥ २२ ॥

गण्डेषु गन्धकरिणामेलारेणुसुगन्धिषु ।
पतितानां मधुलिहां जानुदघ्नं रजोऽभवत् ॥ २३ ॥

चामरैर्वीज्यमानैश्च लोलैर्ध्वजपटैरपि ।
कर्णतालैश्च [1]करिणां शान्तिं रेणुः शनैर्ययौ ॥ २४ ॥

दिङ्मुखेषु प्रसन्नेषु सवैशम्पायनः शनैः ।
[2]दृष्ट्वा व्याप्तभुवं सेनां चन्द्रापीडमभाषत ॥ २५ ॥

युवराजाधिराजेन तारापीडेन साम्प्रतम् ।
अजितं वद तात्किन्नु यज्जेष्यसि महीतले ॥ २६ ॥

पश्य यस्यां दिशि यदा चक्षुर्विक्षिप्यते मया ।
तस्यां तदापरिमितं प्रसूत इव भूर्बलम् ॥ २७ ॥

शृण्वन्नित्थं वचस्तस्य स्फुरत्यहनि भास्वति ।
स प्राप वसतिं रम्यां पटमण्डपशालिनीम् ॥ २८ ॥

तत्र तास्ताः क्रियाः कृत्वा वैशम्पायनपूर्वकम् ।
पत्रलेखा द्वितीयोऽसौ क्षपयामास तां क्षपाम् ॥ २९ ॥

अन्येद्युरखिला जेतुमाशा विख्यातविक्रमः ।
आकम्पयन्बलभरैः प्रतस्थे पर्वतानपि ॥ ३० ॥

---

1. कीरणामिति मातृका । 2. दृष्ट्वा इति मातृका ।

---

२१. भूतधात्री भूमिः ।

निम्नयन्नुन्नतां भूमिं निम्नामुन्नमयन्पुनः ।
काननानि स्थलीकुर्वन्सञ्चचाल बलेने सः ॥ ३१ ॥

पुर्वं प्राचीं ततोऽर्वाचीं प्रतीचीं तदनन्तरम् ।
उदीचीं च दिशं पश्चाद्विजिग्ये वीरदर्पहा ॥ ३२ ॥

संवत्सरत्रयेणैव चतुर्णवमेखलाम् ।
बभ्राम धरणीं कृत्स्नां धरणीतलचन्द्रमाः ॥ ३३ ॥

अथ हेमजटाख्यानां किरातानामुपार्णवम् ।
देशं स्वर्णपुरं नाम जित्वा जग्राह भूपतिः ॥ ३४ ॥

श्रान्तं निजबलं तत्र महीपर्यटनाद्भृशम् ।
अतिष्ठद्विश्रमयितुं पञ्चषाणि दिनानि सः ॥ ३५ ॥

स इन्द्रायुधमारुह्य मृगयार्थं वने चरन् ।
अद्राक्षीत्किन्नरद्वन्द्वमवतीर्णं शिलोच्चयात् ॥ ३६ ॥

अपूर्वपुरुषालोकत्रासजातरयान्वितम् ।
विस्मितोऽदृष्टपूर्वं तद्ग्रहीतुं [1]चकमे नृपः ॥ ३७ ॥

पार्ष्णिप्रहारसञ्जाततीव्रवेगतुरङ्गमः ।
त्यक्त्वैकाकी निजबलं चन्द्रापीडस्तदन्वगात् ॥ ३८ ॥

गृह्यते गृह्यतेऽत्रेदमित्यादरसमन्वितः ।
पञ्चयोजनमात्रं तत्क्षणादनुससार सः ॥ ३९ ॥

आलोकयत एवास्य संमुखापतितं गिरिम् ।
तत्तुरङ्गमुखद्वन्द्वमारुरोह भयातुरम् ॥ ४० ॥

1. चकमे इति मातृका ।

निवर्त्य तद्गतां दृष्टिं पश्चाद्विधृतवाहनः ।
चन्द्रापीडः स्वयं स्थित्वा चिन्तयामास विस्मितः ॥ ४१ ॥

किमर्थं शिशुनेवात्मा भृशमायासितो मया ।
गृहीतेनागृहीतेन किमनेन प्रयोजनम् ॥ ४२ ॥

इतो बलं मे विच्छिन्नं न जाने कियताध्वना ।
इन्द्रायुधोऽप्यतिजवः क्षणाद्देशान्तरं गतः ॥ ४३ ॥

ईदृशं देशमेकाकी प्रान्तरेण समागतः ।
जीर्णपर्णप्रपातेन वर्तन्यपि न लक्ष्यते ॥ ४४ ॥

अनेन कापथेनैव निवृत्तः स्यां कथं पुनः ।
ज्ञायन्ते न च दिङ्मोहादपि पूर्वादयो दिशः ॥ ४५ ॥

अस्मिन्देशे मया कोऽपि मर्त्यधर्मा न लक्ष्यते ।
उपदेक्ष्यति यो मार्गं सुवर्णपुरगामिनम् ॥ ४६ ॥

सुवर्णपुरसीमान्तमुत्तरेण महद्वनम् ।
तच्चातिक्रम्यकैलास इत्येवं श्रूयते किल ॥ ४७ ॥

तस्मादयं स कैलास इतः प्रतिनिवृत्त्य च ।
दक्षिणां दिशमाश्रित्य गन्तव्यं केवलं मया ॥ ४८ ॥

इति सञ्चिन्त्य पाणिस्थरश्मिपाशस्तुरङ्गमम् ।
व्यावर्तयामास पुनः चिन्तयामास तत्क्षणात् ॥ ४९ ॥

परमिन्द्रायुधः श्रान्तः प्राप्तो मध्यंदिनं रविः ।
क्षणं विश्राम्य कुत्रापि गमिष्यामि ततः शनैः ॥ ५० ॥

इति निश्चित्य तृषितो जलान्वेषणतत्परः ।
शालूककन्दैराकीर्णमार्द्रमध्वानमैक्षत ॥ ५१ ॥

उपजातजलाशङ्को गत्वा तेनैव वर्त्मना ।
स विवेश वनं रम्यं मेघवृन्दमिवांशुमान् ॥ ५२ ॥

तन्मध्ये धरणीपालः श्रान्तार्तिहरणक्षमम् ।
रिक्तो मित्रमिवाच्छोदमच्छोदं दृष्टवान्सरः ॥ ५३ ॥

अवदातैर्यदा भाति पयोभिः पूरितान्तरम् ।
कल्पान्तदहनज्वालाद्रवीभूतमिवाम्बरम् ॥ ५४ ॥

उत्फुल्लकुमुदाकीर्णं भाति यद्विमलोदकम् ।
वसुन्धरायां पर्यस्तं स तारकमिवाम्बरम् ॥ ५५ ॥

आपीयमानसलिला यत्र भान्ति मतङ्गजाः ।
पयोनिधौ पयः पातुमवतीर्णा इवाम्बुदाः ॥ ५६ ॥

स्फाटिकद्रवसङ्काशं कैलासद्रवसोदरम् ।
अपारमतिगम्भीरं दृष्ट्वा तन्मुमुदे नृपः ॥ ५७ ॥

सरो विगाह्य [1]सहसा पीततोयं पिपासितम् ।
चन्द्रापीडः परिश्रान्तं स्नपयामास वाजिनम् ॥ ५८ ॥

स तीरतरुशाखायां बध्वा तं कविकागुणैः ।
शष्पं कृपाणिकालूनं व्यक्षिपत्तस्य सन्निधौ ॥ ५९ ॥

निरन्तरेणाञ्जलिना पयः पीत्वा च शीतलम् ।
स्नात्वा सोऽपि यथाकामं सरस्तीरं समासदत् ॥ ६० ॥

1. मनसा पीततोयं पिपासितः इति मातृका ।

५१. शालूककन्दैः तामरसकन्दैः । ५३. अच्छोदं=निर्मलोदकं एतदाख्यं सरश्च ।
५९. कविका=खलीनम् । शष्पं=बालतृणम् "शष्पं बालतृणं घासः" इत्यमरः ।

आस्तीर्यनलिनीपत्रमुपकूलं शिलातले ।
उपधायोत्तरीयं स्वं विश्रान्त्यै निषसाद सः ॥ ६१ ॥

तन्त्रीक्वणितसम्मिश्रं तालनादसमन्वितम् ।
चन्द्रापीडोऽथ शुश्राव गीतध्वनिममानुषम् ॥ ६२ ॥

उत्कण्ठ[1]श्रुतिरुद्ग्रीवो निश्चलस्तब्धलोचनः ।
सन्यस्तशष्पकबलो वाहस्तां दिशमैक्षत ॥ ६३ ॥

चन्द्रापीडोऽथ जिज्ञासुः गीतप्रभवकारणम् ।
दत्तपर्याणमर्वन्तमारुह्य सहसा ययौ ॥ ६४ ॥

ततः कैलासपादस्य नाम्ना चन्द्रप्रभस्य सः ।
तलभागे स्थितं शून्यं सिद्धायतनमैक्षत ॥ ६५ ॥

प्रविश्य सहसाऽद्राक्षीच्चन्द्रापीडश्चतुर्मुखम् ।
भगवन्तमुमाकान्तं भक्तार्तिहरणक्षमम् ॥ ६६ ॥

ततोऽवतीर्य तुरगात्तेवनेनोपसृत्य च ।
चन्द्रापीडो नमश्चक्रे देवं चन्द्रार्धशेखरम् ॥ ६७ ॥

दक्षिणां मूर्तिमाश्रित्य तस्याभिमुखमास्थिताम् ।
जटागोरोचना पिङ्गा दधानामंसलम्बिनीः ॥ ६८ ॥

---

1. शुक्ति इति मातृका ।

६७. तेवनेन पादचारेण उपसृत्य समीपं गत्वा, अथ च सविनयं चन्द्रापीडः शंकरसमीपं गत्वा नमश्चक्रे इति तात्पर्यम् । तेवनपदस्य एतादृशार्थकत्वे रामायणसंवादो यथा—

"गुहेन सहितो रामो लक्ष्मणेन च सीतया ।
तेवनेन वनं गत्वा नदीस्तीर्त्वा बहूदकाः ॥"

(बा॰ का॰ प्र॰ स॰ ३॰)

अत्र च तिलकव्याख्या— "तेवनं पादचरः तेन वनं गत्वा इत्यर्थः ।" इति

हारं हासं च नीहारं [1]घनसारं निशाकरम् ।
स्वदेहप्रभया कामं न्यक्कुर्वाणामिवस्थिताम् ॥ ६९ ॥

श्लथमूलशिलासन्धेः पौलस्त्यभुजपीडनात् ।
कैलासस्य परिभ्रष्टां मूर्तां श्रियमिवाश्रिताम् ॥ ७० ॥

स्रष्टुः सकललोकानां प्रभावादादिवेधसः ।
सप्तलोकपरिभ्रान्त्या श्रान्तां कीर्तिमिवापराम् ॥ ७१ ॥

निश्चलाबद्धलक्ष्येण निर्निमेषेण चक्षुषा ।
तामेव दिव्यवनितां पुनःपुनरुदैक्ष्यत ॥ ७२ ॥

का त्वं किं नाम का जातिः किमर्थं तपसि स्थिता ।
इत्येवमेनां प्रक्ष्यामि [2]यावत्त्वं नोत्पतिष्यति ॥ ७३ ॥

इति संचिन्त्य सहसा तस्मिन्स्फटिकमण्टपे ।
तस्थौ स्तंभं समाश्रित्य गीतान्तं परिपाल्य सः ॥ ७४ ॥

ततो मूकीभवद्वीणा शान्तालिरिव पद्मिनी ।
सोदतिष्ठन्नमस्कर्तुं प्राञ्जलिः परमेश्वरम् ॥ ७५ ॥

अञ्जलिं मूर्ध्नि कुर्वाणा वीणागर्भितमीश्वरम् ।
ववन्दे भक्तिपूर्वं सा पञ्चाङ्ग(स्पृ)ष्टभूतलम् ॥ ७६ ॥

प्रसन्नामलया दृष्ट्या परिवृत्त्यावलोक्य च ।
प्रीतिपूर्वं नरेन्द्राय स्वागतं व्याजहार सा ॥ ७७ ॥

मदीयमाश्रमं प्राप्य गृह्णीष्वातिथिसत्क्रियाम् ।
इत्यातिथेयी व्याहार्षीत्प्रीता तं प्रियदर्शनम् ॥ ७८ ॥

---

1. तारं हारं इति मातृका । 2. यावद्यावन्नोत्पतिष्यतीति मातृका ।

---

७६. वीणागर्भितमिति अंजलिविशेषणम् ।

त्वद्दृष्टिपातमात्रेण जनोऽयं त्यक्तकल्मषः ।
अस्मिन् जने भगवति! प्रीतायां त्वयि किं पुनः ॥ ७९ ॥

इत्युक्त्वा प्राञ्जलिर्भक्त्या नृपः शिष्य इवादरात् ।
व्रजन्तीमनुवव्राज विद्यामिव विचक्षणः ॥ ८० ॥

हन्त मामियमालोक्य कैलासं नाधिरोहति ।
दिवं नोत्पतिता वेगान्नान्तर्धत्ते स्वमायया ॥ ८१ ॥

इत्येवं कुतुकोत्तरं च विमृशंस्तामन्वगेव व्रज-
न्नीरन्ध्रैर्नृपतिः तमालगहनैरव्यक्तसूर्योदयम् ।
अन्योन्यस्थिरबद्धवैरविमुखैः सत्त्वैः सदाधिष्ठितं
साक्षाद्ब्रह्मपुराभमाश्रमपदं शान्तं प्रपेदे शनैः ॥ ८२ ॥

इति श्रीमत्सकलविद्याधरचक्रवर्तिचरणारविन्दशेखरस्य
श्रीराजराजसूनोः श्रीत्रिविक्रमस्य कृतौ कादम्बरी-
कथासारसंग्रहाख्ये काव्ये षष्ठः सर्गः



## सप्तमः सर्गः ।

अथ तस्य महीभर्तुरातिथ्यमतिथिप्रिया ।
चक्रे यथा क्रमं कन्या स्मितपूर्वाभिभाषिणी ॥ १ ॥

तयाऽनुबध्यमानश्च सर्वामतिथिसत्क्रियाम् ।
प्रश्रयावनतेनैव मूर्ध्ना प्राञ्जलिरग्रहीत् ॥ २ ॥

ततस्तया समादिष्टश्चन्द्रकान्तशिलातलम् ।
अध्यासामास भूभर्ता शारदाभ्रमिवोडुराट् ॥ ३ ॥

को नु देशो महाभाग! कामं त्वद्विरहातुरः ।
किं वा कुलं निरुपमं भवता पावनीकृतम् ॥ ४ ॥

प्राप्तः कस्मादिमां भूमिमेकाकी श्रान्तवाहनः ।
आचक्ष्व सर्वमित्येवं चन्द्रापीडमुवाच सा ॥ ५ ॥

आरभ्य जन्मनः सोऽयमावाहमुखदर्शनात् ।
आत्मनश्चरितं सर्वमाचचक्षे विचक्षणः ॥ ६ ॥

भिक्षाकपालमादाय सहसोत्थाय सादरम् ।
आश्रमद्रुममुक्तानि भिक्षायै विचचार सा ॥ ७ ॥

स्वयं निपतितैः पक्वैरमृतस्यन्दिभिः फलैः ।
तद्भिक्षाभाजनं तस्याः परमापूर्यत क्षणात् ॥ ८ ॥

कन्यका पुनरागत्य चन्द्रापीडं सकौतुकम् ।
फलानामुपभोगं सापक्त्रिमाणामयाचत ॥ ९ ॥

---

६. वाहोऽश्वः तन्मुख किन्नरः । तादृशकिन्नरद्वन्द्वदर्शनपर्यन्तमात्मनश्चरितमाचचक्षे इत्यर्थः ।

९. पक्त्रिमाणां पक्वानां फलानामुपभोगमयाचतेत्यर्थः ।

ततस्तयैव प्रत्तानि जग्ध्वा तानि फलानि च ।
पीत्वाऽच्छं निर्झराम्भश्च पुनरासनमाप सः ॥ १० ॥

कन्दमूलफलैः पश्चात् कृताहारां गतश्रमः ।
विस्रब्धमुपविष्टां तां व्याहार्षीन्नृपनन्दनः ॥ ११ ॥

अनुग्रहस्ते मामेवं मुखरीकुरुतेतराम् ।
प्रभुप्रसादलेशोऽपि प्रागल्भ्यं विदधाति हि ॥ १२ ॥

देवदानवगन्धर्वसिद्धविद्याधरादिषु ।
त्वयाऽनुगृह्यते कस्य कतरज्जन्मना कुलम् ॥ १३ ॥

वयसि प्रथमे बध्वा जटा वार्धकशोभिनीः ।
शिरीषमृद्वि ! केन त्वं तपश्चरसि दुश्चरम् ॥ १४ ॥

दिव्यं हित्वाश्रमपदं रम्यमेकाकिनी भृशम् ।
अपि तिष्ठसि कस्मात्त्वं वनमेतदमानुषम् ॥ १५ ॥

क्वेदं प्रसूनमृदु ते वपुर्ल्याजकोमलम् ।
क्वेदं तपः क्रूरतरं मुनीनामपि दुष्करम् ॥ १६ ॥

इत्थं निगदिता तेन चन्द्रापीडेन सादरम् ।
दीर्घं निश्वस्य निःशब्दं मन्दमन्दं रुरोद सा ॥ १७ ॥

तां दृष्ट्वा रुदितां कन्यामात्मानमपराधिनम् ।
चिन्तयन्नानिनायास्या मुखप्रक्षालनोदकम् ॥ १८ ॥

प्रक्षाल्य पयसा नेत्रे नलिनोदरसोदरे ।
वल्कलोपान्तभागेन सा ममार्ज शनैर्मुखम् ॥ १९ ॥

पापाया मन्दभाग्यायाश्चरितेनाविलेन मे ।
किमनेन महाभाग ! श्रुतेनाप्यश्रुतेन वा ॥ २० ॥

किं वा श्रोतुं यदि श्रद्धा चरितं मामकं शृणु ।
इत्युक्त्वा शोककलुषा सा वक्तुमुपचक्रमे ॥ २१ ॥

राजन्नप्सरसो नाम कन्याः सन्ति सुरालये ।
तासां जगत्प्रसिद्धानि चतुर्दश कुलानि हि ॥ २२ ॥

एकं भगवतः स्वान्तात्समुत्पन्नं प्रजापतेः ।
वेदेभ्योऽन्यत्समुद्भूतं अन्यदग्नेः समुत्थितम् ॥ २३ ॥

प्रसूतं पवनादन्यदमृतादन्यदुत्थितम् ।
अन्यज्जलान्तराज्जातमन्यदर्काद्विनिर्गतम् ॥ २४ ॥

अन्यन्निष्पतितं सोमादन्यद्भूमेः समुत्थितम् ।
जातं सौदामिनीभ्योऽन्यदपरं मृत्युना कृतम् ॥ २५ ॥

अपरं विश्वजयिना निर्मितं मीनकेतुना ।
सुते मुनिररिष्टा च द्वे दक्षस्य बभूवतुः ॥ २६ ॥

ताभ्यां कुलद्वयं जातं गन्धर्वैः सह भूपते !
कुलान्यप्सरसामेवमेतान्यत्र चतुर्दश ॥ २७ ॥

चित्रसेनमुखाः पुत्रा मुनेः पञ्चदशाभवन् ।
तेषां चित्ररथो भ्राता प्रसिद्धः षोडशोऽभवत् ॥ २८ ॥

गन्धर्वभूमिमखिलां अशाद्भुजबलेन सः ।
अधित्यकां स्ववीर्येण मरुत्वानिव मैरवीम् ॥ २९ ॥

इतश्च नातिदूरे हि हेमकूटो नगाधिपः ।
निवासस्तस्य देवस्य कैलास इव धूर्जटेः ॥ ३० ॥

---

२८. मुनेः=पूर्वोक्ताया दक्षदुहितुः ।

२९. मैरवीं मेरुसम्बन्धिनीमधित्यकामित्यर्थः ।

अच्छोदं नाम गम्भीरं तदुपज्ञमिदं सरः ।
एतच्चैत्ररथं नाम वनं च तदुपक्रमम् ॥ ३१ ॥

सुरासुरेन्द्रकोटीरसङ्घृष्टमणिपादुकः ।
अत्र कात्यायनीकान्तः तेनायं स्थापितो हरः ॥ ३२ ॥

अरिष्टायास्तु हंसाख्यो गन्धर्वकुलशेखरः ।
षण्णां तुम्बुरुमुख्यानां ज्येष्ठो भ्राता सुतोऽभवत् ॥ ३३ ॥

स तु चित्ररथेनैव भ्रात्रा हंसोऽभिषेचितः ।
कुमार एव गान्धर्वं साम्राज्यपदमानशे ॥ ३४ ॥

दोर्दण्डबलविख्यातैः गन्धर्वैः परिपालितः ।
स एव गिरिरावासस्तस्यापि तपनद्युतेः ॥ ३५ ॥

यत्तु शीतांशुकिरणाज्जातमप्सरसां कुलम् ।
सञ्जाता कन्यका तत्र लक्ष्मीरिव पयोनिधौ ॥ ३६ ॥

सौभाग्यसम्पदः सीमा सौन्दर्यगुणशालिनी ।
सा न नाम्नैव मूर्त्यापि गौरीति प्रथिताऽभवत् ॥ ३७ ॥

हंसो हरिप्रभावस्तां देवसेनामिवाग्निभूः ।
रूपशीलादिसम्पन्नामुपायंस्त यथाविधि ॥ ३८ ॥

पद्मिनीव शरत्कालं चन्द्रिकेव सुधाकरम् ।
अनुरूपं तमासाद्य शुशुभे सा शुचिस्मिता ॥ ३९ ॥

दाम्पत्यमनयोरासीदवाङ्मनसगोचरम् ।
परमानन्दविश्रान्तं शिवयोरिव यामलम् ॥ ४० ॥

तयोश्च तादृशोः पित्रोरीदृशी दुःखभाजनम् ।
अहमेकैव तनया जाता शोकाय केवलम् ॥ ४१ ॥

अतिक्रान्ते तु दशमे दिवसे कृतमङ्गले ।
महाश्वेतेति मे नाम यथार्थमकरोत् गुरुः ॥ ४२ ॥

साऽहं पितृगृहे मौग्ध्यादज्ञातसुखदुःखधीः ।
अतिनीतवती बाल्यं विद्येवेन्द्रियजं सुखम् ॥ ४३ ॥

कान्तिवारिधिपूर्णेन्दुमाद्यत्पञ्चेन्द्रियासवम् ।
विलासदर्शनाचार्यं ततो यौवनमाश्रिता ॥ ४४ ॥

एकदा जगदानन्दकारी मित्रं मनोभुवः ।
केसरप्रसवामोदवासिताखिलदिङ्मुखः ॥ ४५ ॥

अशोकताडनाक्रन्दन्मानिनी[1] मणिनूपुरः ।
पञ्चेषुशरशीत्कारसंत्रस्तपथिकाङ्गनः ॥ ४६ ॥

पुंस्कोकिलकलालापकन्दर्पजनकाहलः ।
श्रीमत्पुष्पाकरो मासः प्रादुरासीन्मनोहरः ॥ ४७ ॥

सरोजचषकान्तस्थं मधु पातुं मधुव्रती ।
सपीतिलुब्धा सस्नेहमाजुहाव मधुव्रतम् ॥ ४८ ॥

ओष्ठैरिवाम्बुजदलैर्दशनैरिव केसरैः ।
केशैरिव बभुर्भृङ्गैर्नलिन्योऽब्जैर्मुखैरिव ॥ ४९ ॥

मरन्दपङ्कमग्नाङ्घ्रिः षट्पदी पद्मकोटरात् ।
उत्तारयितुमात्मानमुच्चुकूज भिया पतिम् ॥ ५० ॥

भावसूचित[2] सिद्धान्तद्वन्द्वमेलनकारिषु ।
मधुमासदिनेष्वेवं प्रवृत्तेषु शनैः शनैः ॥ ५१ ॥

---

1. क्रन्दमानिनी इति मातृका । 2. सिद्धान्तं द्वन्द्व इति मातृका ।

४८. सपीतिलुब्धा सहपानलुब्धा ।

कदाचिदम्बया सार्धं साहं तरलिकान्विता ।
भवितव्यमबुध्वैव स्नातुमच्छोदमभ्यगाम् ॥ ५२ ॥

तत्र कच्छस्थले तत्तत्पश्यन्ती दृग्विलोभनम् ।
क्रीडारसज्ञैरचरं क्रीडन्त्यालीजनैः सह ॥ ५३ ॥

आबध्यमानं भ्रमरैरहंपूर्विकयाकुलैः ।
किमप्यपूर्वमाजिघ्रं सौरभ्यं सुमनोभवम् ॥ ५४ ॥

तदनाघ्रातपूर्वं मामुपनीतं नभस्वता ।
षट्पदामिव सौरभ्यमनयद्वशमात्मनः ॥ ५५ ॥

किमेतदित्युपारूढकुतूहलवशादहम् ।
गत्वा पदानि कतिचित्क्वणन्माणिक्यनूपुरम् ॥ ५६ ॥

[1]तपःप्रभावाद्दुर्दर्शं जटावल्कलवेष्टितम् ।
प्रभामण्डलमध्यस्थं प्रभाकरमिवोदितम् ॥ ५७ ॥

बिभ्राणं रोमलतिकामुदरेण तनीयसा ।
तमोरेखामिवान्तस्थां बोधदीपेन निर्गताम् ॥ ५८ ॥

दधानं पाणिपद्मेन स्फाटिकीमक्षमालिकाम् ।
मुखेन्दुसेवासंप्राप्तस्फुरत्तारानुकारिणीम् ॥ ५९ ॥

हरनेत्रानलप्लुष्टं मित्रं जीवयितुं पुनः ।
वसन्तमिव तत्प्रेम्णा चरन्तं दुश्चरं तपः[2] ॥ ६० ॥

निह्नुत्य पौष्पमिष्वासं ध्वजं च मकराञ्चितम् ।
उग्रकोपभयात्कामं मुनिमूर्तिमिवाश्रितम् ॥ ६१ ॥

---

1. नव प्रभावादिति मातृका । 2. पुनः इति मातृका ।

५३. कच्छस्थले अनूपप्रदेशे ।

६१. उग्रस्य शङ्करस्य कोपात् " उग्रः कपर्दी श्रीकण्ठः " इत्यमरः ।

कपिञ्जलाभिधानेन सख्या सह समागतम् ।
चक्षुःप्रीतिकरं कञ्चिद्युवानं मुनिमैक्षिषि ॥ ६२ ॥

यस्मिन्नवयवे तस्य दृष्टिर्निपतिता मम ।
लावण्यपङ्कलग्नेव नान्यत्र चलितुं क्षमा ॥ ६३ ॥

अवतंसीकृतां तेन वसन्तश्रीस्मितोपमाम् ।
अदृष्टपूर्वामद्राक्षं दिव्यां कुसुममञ्जरीम ॥ ६४ ॥

अस्याः कुसुममञ्जर्याः प्रायः परिमलोऽह्ययम् ।
इति बुध्वा च सोत्कण्ठं पश्यन्ती तमचिन्तयम् ॥ ६५ ॥

अहो विधातुर्मधुरा रूपनिर्माणचातुरी ।
इदं प्रथमदृष्टायै यस्यै स्पृहयते मनः ॥ ६६ ॥

अमृतं वाऽमृतांशुं वा यदि वा मादनं मधु ।
अस्य सृष्टिविधौ हृद्यं विधाता विसुपाददे ॥ ६७ ॥

इति सञ्चिन्तयन्तीं मां अनार्यः पूर्णयौवनाम् ।
स्मरः परवशां चक्रे मधुर्मधुकरीमिव ॥ ६८ ॥

रागेण किं किं कामेन किं वा तद्रूपसम्पदा ।
सत्कमासीदिदं चेतः तस्मिन्सङ्गनिषेधिनि[1] ॥ ६९ ॥

उत्क्षिप्य नीयमानेव लोलैस्तत्पार्श्वमिन्द्रियैः ।
पुरस्तात्कृष्यमाणेव मूढेन हृदयेन च ॥ ७० ॥

पृष्ठतः प्रेर्यमाणेव क्रूरेण कुसुमेषुणा ।
आत्मानमात्मनोद्वोढुं नाशकं तस्य सन्निधौ ॥ ७१ ॥

1. चेतनास्मिन्निति मातृका ।

क्षालितेवागलल्लज्जा ततो घर्माम्बुबिन्दुभिः ।
स्मरनाराचविद्धेव गात्रयष्टिरकम्पत ॥ ७२ ॥

अज्ञातरतितन्त्रेऽस्मिञ्जने निक्षिपताद्य माम् ।
किमनार्येण कामेन लब्धं स्यादित्यचिन्तयम् ॥ ७३ ॥

अय मेवंविधां यावद्वृषस्यन्तीं न वेत्ति माम् ।
यावत्सचेतना चास्मि तावच्छ्रेयोऽपसर्पणम् ॥ ७४ ॥

तथाऽपि सर्वपूज्येयं जातिरित्यवधार्य च ।
तद्दृष्टिरज्वाकृष्टेव तत्सन्निधिमुपागमम् ॥ ७५ ॥

अंसविस्रस्तधम्मिल्लमालोलमणिकुण्डलम् ।
सामिच्युतवतंसाब्जं युवानं तमवन्दिषि ॥ ७६ ॥

प्रणामपूर्वं मुनिमेत्यचान्य-
[1]मपृच्छमव्यञ्जितकामचेष्टम् ।
अयं युवा कस्य तपोधनस्य
पुत्रोऽस्य किं नाम गुणानुरूपम् ॥ ७७ ॥

आरोपिता श्रोत्रमनेन यूना
नितान्तनिष्यन्दिमरंदधारा ।
आसक्तभृङ्गा कलिका द्रुमस्य
किं नामधेयस्य सुगन्धिरेषा ॥ ७८ ॥

एवं वदन्तीमनुरागपूर्व
मालोक्य मां सादरमब्रवीत्सः ।

---

1. मपृष्टमप्यञ्जितकामचेष्टमिति मातृका ।

---

७४. वृषस्यन्तीं = कामुकीं "वृषस्यन्ती तु कामुकी" इत्यमरः

अनेन किं मानिनि ते श्रुतेन
तथापि वाञ्छा यदि वक्तुमीशे ॥ ७९ ॥

अस्ति प्रसिद्धो भुवनत्रयेऽपि
महामुनिः किन्नरगीतकीर्तिः ।
पुराविदः सत्यतपःप्रभावं
यं श्वेतकेतुं [1]प्रवदन्ति नाम्ना ॥ ८० ॥

स एकदा चारणसिद्धसेव्यां
चित्रोदकां पद्मभवैः परागैः ।
स्नातुं मुहुः सैकतलीनहंसां
मन्दाकिनीं मन्दमुपाससाद ॥ ८१ ॥

विगाहमानं सुरलोकसिन्धुं
विशेषदृश्यं नवयौवनेन ।
ददर्श तं पद्मवने वसन्ती
लक्ष्मीर्जगन्मङ्गलदीपरेखा ॥ ८२ ॥

तं पुण्डरीकासनसन्निषण्णा
विलोक्य सर्वावयवानवद्यम् ।
सा तत्क्षणं जातरतानुभूति-
रवाप तत्रैव कृतार्थभावम् ॥ ८३ ॥

नवौरसं नाथ! गृहाण पुत्र
मित्येवमुक्त्वा सदयं कराभ्याम् ।

1. प्रभवन्ति इति मातृका।

अङ्कात्समादाय कुमारमेनं
प्रादात्प्रियाय प्रियदर्शनं सा ॥ ८४ ॥

तास्ताः क्रियाः शैशवकालयोग्या
विधाय विद्यानिधिरागमोक्ताः ।
स पुण्डरीकप्रभवं कुमारं
नाम्नाऽपि चक्रे किल पुण्डरीकम् ॥ ८५ ॥

ततोयमेवंसुविभक्तसन्धि
साम्राज्यसिंहासनमात्मयोनेः ।
आनन्दयित्रीमबलाजनाना-
[1]मासेदिवान् यौवनराज्यलक्ष्मीम् ॥ ८६ ॥

इयं हि बाला कलिका समुद्रा
ज्जातस्य मन्दारमहीरुहस्य ।
उद्भिन्नचूतद्रुममप्यरण्यं
यत्सौरभादुच्चलितद्विरेफम् ॥ ८७ ॥

सार्धं मया स्वर्गपथेन नन्तु
कैलासनाथं सहसा व्रजन्तम् ।
मध्येपथं नन्दनदेवतैनं
दृष्ट्वा ननाम प्रतिपत्तिपूर्वम् ॥ ८८ ॥

निर्बन्धपूर्वं वनदेवता सा
बद्धाञ्जलिः प्रश्रयनम्रमौलिः ।

1. मासादिति इति मातृका ।

८४. अङ्कात् = उत्सङ्गात् ॥

एनां ददौ कल्पतरुप्रसूतां
    क्रन्दद्द्विरेफां कलिकाममुष्मै ॥ ८९ ॥

याच्ञामनादृत्य गतं तदीयां
    बलादनिच्छन्तममुं निरुध्य ।
तस्याः समादाय करादमुष्य
    कर्णे सुगन्धिं कलिकामकार्षम् ॥ ९० ॥

इत्येवमुक्त्वा विरतेऽथ तस्मिन्
    ज्ञात्वा मदिच्छां मधुरस्वभावः ।
कर्णे युवा तां कलिकां मदीये
    कम्पोत्तरेणात्मकरेण चक्रे ॥ ९१ ॥

ततः करस्पर्शसुखेन तस्य
    मुहुर्मुहुः कण्टकिताङ्गयष्टिः ।
अतिष्ठमाविःश्रमवारिणाहं
    मुखेन पारिप्लवलोचनेन ॥ ९२ ॥

अथ क्षणात्सोऽपि युवा नितान्तं
    बाणेन विद्धो हृदि पुष्पकेतोः ।
धैर्येण सार्धं न करारविन्दा-
    च्च्युतां विवेद स्फटिकाक्षमालाम् ॥ ९३ ॥

एनां गृहीत्वा हृदये निधाय
    सद्यः समुत्कम्पवता करेण ।
तद्गात्रसंस्पर्शसुखानुभूतिं
    तत्कालयोग्यामहमन्वभूवम् ॥ ९४ ॥

तदिङ्गिताकारविलोकनेन
भूयोऽपि संवर्धितकामबाधा ।
अवर्णनीयां वचसां प्रपञ्चैः
कामप्यवस्थां क्षणमन्वभूवम् ॥ ९५ ॥

इत्थं प्रवृत्ते सति रागबन्धे
सम्प्राप्य मां वाचमुवाच चेटी ।
त्वत्प्राप्तिकालं परिपाल्य देवी
स्नाता चिरात्स्वामिनि ! तिष्ठतीति ॥ ९६ ॥

अहं च तस्या वचनेन खिन्ना
वन्या वशेव प्रथमाङ्कुशेन ।
अगच्छमाकृष्य शनैस्तदास्या-
त्प्रोतामिव प्रेमगुणेन दृष्टिम् ॥ ९७ ॥

ततो गतायां मयि सानुतापं
तथाविधं तस्य विलोक्य धैर्यम् ।
विनेतुकामो विरसाऽशयः तं
कपिञ्जलः क्रूरमिदं बभाषे ॥ ९८ ॥

सखे ! किमेतत्तव युक्तरूपं
किं वा जटानामुत वल्कलानाम् ।
पुरः कराग्रादपि वेपमाना-
द्यदक्षमालां गलितां न वेत्सि ॥ ९९ ॥

तस्मिन्वदत्येवमनुद्रुतो मा-
मलीककोपस्फुरिताधरोष्ठम् ।

तां पुण्डरीकः स्फटिकाक्षमालां
   ह्रीसन्नकण्ठः करुणं ययाचे ॥ १०० ॥

अथात्मकण्ठादवमुच्य तस्मै
   मुक्तावलीं मोहवशादयच्छम् ।
जग्राह निःसंशयमेव सोऽपि
   तामक्षमालेति मतिभ्रमेण ॥ १०१ ॥

ह्रिया निवृत्तस्य शनैर्महर्षे
   रदर्शनादाननशीतभानोः ।
अक्ष्णोः सनाथा अपि [1]पुष्पवद्भ्या
   मन्धंकरिण्यो हरितो बभूवुः ॥ १०२ ॥

इत्थं गते सति तमेव विचिन्तयन्ती
   सख्या बलेन सहसैव निवर्त्यमाना ।
नीता प्रतीपमधिकं कलुषा नदीव
   शून्या गृहं प्रति ततः शनकैरगच्छम ॥ १०३ ॥

इति श्रीमत्सकलविद्याधरचक्रवर्तिचरणारविन्दशेखरस्य
श्रीराजराजसूनोः श्रीत्रिविक्रमस्य कृतौ कादम्बरी
कथासारसंग्रहाख्ये काव्ये सप्तमः सर्गः ।

1. पुष्पवज्ज्यामिति मातृका ।

१०२ पुष्पवन्तौ दिवाकरनिशाकरौ ।
   एकयोक्त्या पुष्पवन्तौ दिवाकरनिशाकरौ ॥ इति अमरः ।

## अष्टमः सर्गः ।

अथ दुःसहसन्तापात्सन्निरुध्य सखीजनम् ।
अहमेकाकिनी तूष्णीं कन्यान्तःपुरमासदम् ॥ १ ॥

तत्र मञ्चं समारुह्य निरुद्धाशेषभावना ।
तमेव हि महाभागं पुनःपुनरचिन्तयम् ॥ २ ॥

सिन्धुवेलेव शीतांशौ पद्मिनीव प्रभाकरे ।
बद्धभावा दृढं जाता तस्मिन्दूरस्थितेऽप्यहम् ॥ ३ ॥

प्राणानां निर्यतां रक्षा देहसिद्धौ रसायनम् ।
अग्रभूः सर्वसौख्यानां तच्चिन्तैव ममाभवत् ॥ ४ ॥

किं करोमि क्व गच्छामि किं पश्यामि शृणोमि किम् ? ।
कस्य दुःखं वदामीति सर्वं नाज्ञासिषं तदा ॥ ५ ॥

पवनं तद्दिशायातं बकुलामोदवाहिनम् ।
अङ्गैरनङ्गसन्तप्तैरैच्छमालिङ्गितुं दृढम् ॥ ६ ॥

परं तद्गतधीरग्रे दृष्टं द्रष्टुमशक्तया ।
केवलं शून्यया दृष्ट्या तामेव दिशमैक्षिषि ॥ ७ ॥

ततस्तरलिका नाम चेटीपश्चाद्विलम्बिता ।
मां तथावस्थितां प्राप्य मन्दमेवमभाषत ॥ ८ ॥

यौ भर्तृदारिके ! तत्र दृष्टौ मुनिसुतौ तयोः ।
अवतंसीकृता येन तवेयं पुष्पमञ्जरी ॥ ९ ॥

स तु मामन्वगागत्य सखायमपि वञ्चयन् ।
सानुतापं च साशङ्कमिदमाह महामतिः ॥ १० ॥

किं नामधेया कन्येयं कस्यापत्यं महात्मनः ।
किमर्थमिह संप्राप्ता क प्रयाणानि मे वद ॥ ११ ॥

अस्ति हंस इति ख्यातो गन्धर्वाणामधीश्वरः ।
गायन्ति सुरसुन्दर्यः यस्य कीर्तिमनिन्दिताम् ॥ १२ ॥

गौर्यां शीतांशुजातायां तेनैवोत्पादिता किल ।
महाश्वेताभिधानेऽयं अस्माकं भर्तृदारिका ॥ १३ ॥

सम्प्राप्ता स्नातुमच्छोदं सखीभिरनुमातरम् ।
प्रस्थिता हेमकूटाद्रिमिति सर्वमवादिषम् ॥ १४ ॥

स्थित्वा मुहूर्तं सव्रीडमन्तः किमपि चिन्तयन् ।
प्रत्याह स्म महाभागः मधुरं मधुराकृतिः ॥ १५ ॥

अविसंवादिनीमूर्तिस्तवेयं कलभाषिणि !
यत्किञ्चदर्थये मोहात्तत्कुरुष्व तलोदरि ! ॥ १६ ॥

यदि मद्वचनं कुर्याः परं जीवितुमुत्सहे ।
ईदृशानां विना दृष्टीं कल्याणि ! वद का गतिः ॥ १७ ॥

भगवन् ! किमिदं युक्तं तव दासजने मयि ।
पुनीते दृष्टिपातोऽपि जन्तुमाज्ञा तु किं पुनः ॥ १८ ॥

विस्रब्धं वद वक्तव्यं जनोऽयमनुगृह्यताम् ।
इत्येवमुक्तः सदयं पश्यन् दृष्ट्या प्रसन्नया ॥ १९ ॥

तमालपत्रं निष्पीड्य तद्रसेन सुगन्धिना ।
पट्टिकां स्वयमालिख्य वल्कलोपान्तपाटिताम् ॥ २० ॥

रहस्त्वमस्यै कन्यायै दत्त्वेमामिति दत्तवान् ।
इत्युक्त्वा सा तरलिका मह्यं प्राणानिवार्पयत् ॥ २१ ॥

तत्र तेनैव लिखितां ललितार्थां सुखश्रवाम् ।
तुल्यानुरागपिशुनामिमामार्यां व्यलोकयम् ॥ २२ ॥

"दूरं मुक्तालतया बिससितया विप्रलोभ्यमानो मे ।
हंस इव दर्शिताशो मानसजन्मा त्वया नीतः ॥" इति ।

सन्देशेनामुना साऽहं किञ्चिदुच्छ्वसिताऽभवम् ।
म्लाना पृथिव्यां पर्यस्ता लतेवोपघ्नशाखिना ॥ २४ ॥

अपूर्वामिव तां वीक्ष्य प्रीतिस्निग्धेन चक्षुषा ।
लालयित्वा करेणास्याः [1]श्यामलां चूर्णकुन्तलान् ॥ २५ ॥

कथं तरलिके तत्र दृष्टो मुनिकुमारकः ।
कियदस्माननुप्राप्तः तेन किं किमुदीरितम् ॥ २६ ॥

त्वया किमुत्तरं दत्तं लिखिता पट्टिका कथम् ।
इत्येवमादि सकलं पर्यपृच्छं पुनः पुनः ॥ २७ ॥

तस्मिन्नभ्रंलिहे हर्म्ये तथैवोपस्थिता तया ।
कथया पुण्डरीकस्य निःशेषमनयं दिनम् ॥ २८ ॥

ततः क्षीणप्रभे भानावस्ताद्रिशिखरं गते ।
सा छत्रग्राहिणी प्राप्य मामेवमिदमब्रवीत् ॥ २९ ॥

तिष्ठत्यन्यतरो द्वारि तयोर्मुनिकुमारयोः ।
ब्रवीति चाक्षमालां तामागतोस्मीति याचितुम् ॥ ३० ॥

कुमारशब्दमात्रेण पुनरागतजीविता ।
अनुत्थितापि स्वस्थानाद्गत्वेव द्वारमागता ॥ ३१ ॥

1. कुटिलां इति मातृका

मृतस्येवायुषः प्राप्तिः अन्धस्येवाक्षिसंभवः ।
निःस्वस्येव निधेर्लाभो मम तस्यागमोऽभवत् ॥ ३२ ॥

ततः कञ्चुकिनं कञ्चिदानयेत्यादिशं मुनिम् ।
आनीय सोऽपि तं शीघ्रं अन्तःपुरमगाहत ॥ ३३ ॥

शून्यं छायाविरहितं पुण्डरीकं [1]विनाऽऽगतम् ।
तं कपिञ्जलमद्राक्षं भग्नशाखामिव द्रुमम् ॥ ३४ ॥

सादरं सहमोत्थाय स्वयमानीय चासनम् ।
सन्निवेश्य मुनिं तत्र न्यषीदं धरणीतले ॥ ३५ ॥

स्थित्वा मुहूर्तं यत्किञ्चिद्विवक्षुरिव मामसौ ।
मत्समीपोपविष्टायां तस्यां चक्षुरपातयत् ॥ ३६ ॥

इयं तरलिका स्वामिन्! मम प्राणा बहिश्चराः ।
अस्ति चेद्वद वक्तव्यमित्यवोचं कपिञ्जलम् ॥ ३७ ॥

किं ब्रवीम्यत्र निःशङ्कं राजपुत्रि! तवाग्रतः ।
वागेव लज्जया तावज्जिह्वाग्रं नाधिरोहति ॥ ३८ ॥

कः पश्येद्राजपुत्रीणामसूर्यंपश्यमाननम् ।
तथापि तव भावोऽयमस्मद्भाग्यपरम्परा ॥ ३९ ॥

प्राणांस्त्यक्त्वापि सुहृदा रक्षणीयः सुहृज्जनः ।
इति लज्जां परित्यज्य भूतार्थं कथयामि ते ॥ ४० ॥

त्वत्समक्षममुं तत्र निर्भर्त्स्य [2]परुषं ततः ।
स्थानात्स्थानान्तरं यातो राशेराशिमिवांशुमान् ॥ ४१ ॥

1. विनाकृतमिति मातृका । 2. पुरुषमिति मातृका ।

ततस्त्वयि निवृत्तायामयं किं नु करिष्यति ।
इति द्रष्टुं पुनः प्राप्तः तत्र तं न व्यलोकयम् ॥ ४२ ॥

किमप्यनिष्टमेकाकी रागान्धः स्वयमाचरेत् ।
इति स्नेहात्तमन्वेष्टुं वत्सं धेनुमिवोद्यतः ॥ ४३ ॥

लताकुञ्जानि हृद्यानि पुष्पिता वृक्षवाटिकाः ।
नदीतीराणि रम्याणि व्यचरं तद्दिदृक्षया ॥ ४४ ॥

गिरिप्रस्थाद्गिरिप्रस्थं वाप्या वापीं वनाद्वनम् ।
अभ्रमं पुनरावेगात्पद्मात्पद्ममलिर्यथा ॥ ४५ ॥

तं दष्टमिव सर्पेण शयानं नष्टचेतनम् ।
लतानिकुञ्जे कुत्रापि पुण्डरीकं व्यलोकयम् ॥ ४६ ॥

एवं किं बाधते काम इति पर्याकुलो भृशम् ।
किमिदं पुण्डरीकेति तमजानन्निवाब्रवम् ॥ ४७ ॥

उन्मील्य लोचने मन्दमपाङ्गगलदश्रुणी ।
अयमा[1]मिषदोषज्ञं दुःखार्तो मां व्यलोकयत् ॥ ४८ ॥

सखे ! विदितवृत्तान्तः किमर्थं पृच्छसीह माम् ।
इति लज्जातुरो मन्दमव्यक्ताक्षरमब्रवीत् ॥ ४९ ॥

सखे ! सर्वमहं वेद्मि परमाणुश्च पर्वतः ।
मज्जतश्चेत्समुद्रे द्वौ वद कैव भिदा तयोः ॥ ५० ॥

महानपथवर्ती त्वं यदि त्वां निरुणद्धि कः ।
उत्कूलः सिन्धुरागच्छेद्वद कस्तं प्रतीपयेत् ॥ ५१ ॥

1. माविषदोषज्ञमिति मातृका

४८. आमिषदोषज्ञं भोग्यवस्तुदो . .

दिवि मारुतवेगेन प्लवन्ते यदि पर्वताः ।
लभन्तां कुत्र विश्रामं लघवस्तूलराशयः ॥ ५२ ॥

समुद्र इव गम्भीरः कुलशैल इवाचलः ।
त्वमेवं चपलः स्याच्चेत्कस्मिन्पर्वणि मादृशाः ॥ ५३ ॥

क दीना मुनयः शान्ताः कन्दमूलफलाशनाः ।
क च भोगाभिलाषोऽयमशान्तजनसेवितः ॥ ५४ ॥

क योगिनां महानन्दः ब्रह्मध्यानसमुद्भवः ।
क प्राकृताभिनन्द्यानि मन्मथस्पन्दितानि च ॥ ५५ ॥

क जटावल्कलवती शान्ता मूर्तिस्तपस्विनाम् ।
क च कन्या महाश्वेता गन्धर्वकुलसुन्दरी ॥ ५६ ॥

विद्याप्यभङ्गुरा ज्ञानं भवक्लेशहरं त्वयि ।
सर्वमेकपदे नष्टमकृतज्ञे कृतं यथा ॥ ५७ ॥

इन्द्रियैरभिभूतास्ते शक्राद्या इति शुश्रुमः ।
अतोऽनर्थकरादस्माद्विरम त्वं महामते ! ५८ ॥

एवं ब्रुवन्तं मामाह प्रमृज्य नयने पुनः ।
न त्वं कन्दर्पबाणेन विद्धोऽहमिव मर्मणि ॥ ५९ ॥

ज्ञानं चतुर्वर्गफलं विद्या च विनयोत्तरा ।
अभूद्गन्धर्वकन्यायाः तस्याः प्राग्दर्शनान्मम ॥ ६० ॥

स्वाधीनं यस्य हृदयं यस्य सन्तीन्द्रियाणि वा ।
सखे ! स खलु ते पात्रमुपदेशस्य नेतरः ॥ ६१ ॥

निमीलितेऽपि नयने सैव सर्वाङ्गसुन्दरी ।
सव्रीडा तिष्ठते मम सखे ! किं करवाण्यहम् ॥ ६२ ॥

अत्र यत्प्राप्तकालं मे तत्करोतु भवानिति ।
उक्त्वा तूष्णीं शिलापट्टे मृतप्रायोऽशयिष्ट सः ॥ ६३ ॥

इदानीमुपदेशो मे[1]ऽशान्तस्य परितापकृत् ।
शीतलः पयसो बिन्दुः प्रतप्तस्येव सर्पिषः ॥ ६४ ॥

आद्यमाहुर्महात्मानः शरीरं धर्मसाधनम् ।
अतोऽस्य रक्षा कार्येति निर्णीय सहसोत्थितः ॥ ६५ ॥

ततः पल्लवभङ्गेन पर्यङ्कं परिकल्प्य च ।
शाययित्वा च तं तत्र पद्मपत्रैरवीजयम् ॥ ६६ ॥

सुगन्धि घनसारं च चूर्णयित्वाऽतिशीतलम् ।
अकार्षं स्विन्नगात्रस्य मुहुः स्वेदप्रतिक्रियाम् ॥ ६७ ॥

संक्षुद्य च शिलापट्टे गन्धसारं हिमाम्बुना ।
कृत्वा ललाटिकां चर्चां सर्वाङ्गीणामकल्पयम् ॥ ६८ ॥

श्वासावसिष्टप्राणोऽयमवस्थामष्टमीं गतः ।
हा कथं जीवयाम्येनमिति सन्तप्तमानसः ॥ ६९ ॥

तमुज्जीवयितुं बन्धुं त्वामहं शरणं गतः ।
नलं कामातुरं हंसो दमयन्तीमिवादरात् ॥ ७० ॥

तिष्ठत्युत्कलिकादीनः त्वामेव प्रतिपाल्य सः ।
वर्षासु[2] चातकयुवा तृषितः कालिकामिव ॥ ७१ ॥

प्रमाणमत्र भवतीत्युक्त्वा बाष्पाविलेक्षणः ।
ह्रीनम्रवदनस्तूष्णीं लिखन्नास्त महीतलम् ॥ ७२ ॥

अवर्धयन्मदुत्कण्ठां वाचा करुणया मुनिः ।
प्रभया तपनः क्षीणां दर्शे शशिकलामिव ॥ ७३ ॥

1. मे शान्तोऽस्य इति मातृका । 2. पर्वासु इति मातृका ।

कपिञ्जले वदत्येवं दीनमञ्जलिपूर्वकम् ।
प्रविश्य कञ्चुकी कश्चिदिदं वचनमब्रवीत् ॥ ७४ ॥

त्वमस्वस्थशरीरेति भृशमाकर्ण्य दुःखिता ।
देवसेनामिवेन्द्राणी देवी द्रष्टुमिहागता ॥ ७५ ॥

श्रुत्वा तद्वचनं क्रूरं तापमाप कपिञ्जलः ।
पर्जन्यरवमाकर्ण्य परुषं पन्नगो यथा ॥ ७६ ॥

दीनैः विमित्र बहुभिर्वचसां प्रपञ्चैः
[1]भूयोऽपि ते चरणयोः प्रणमामि मूर्ध्ना ।
प्राणाः त्वयि प्रियसखस्य ममेत्युदीर्य
पश्चाद्विषण्णहृदयः शनकैरयासीत् ॥ ७७ ॥

कालोदिता मघवतः प्रथमा सुवृष्टि-
र्दावेन भूमिमिव तीव्रतरेण दग्धाम् ।
कामेन तप्तहृदयां श्रवणामृतं वा-
गाश्वासयत्परममुष्य दयावतीं माम् ॥ ७८ ॥

अम्बा ततः सभयमेत्य कृपावती मां
पृष्ट्वा पुनः पुनरनामयमादरेण ।
वामालका बलरिपोरिव वैजयन्त-
मभ्रंलिहं निजगृहं पुनराससाद ॥ ७९ ॥

इति श्रीमत्सकलविद्याधरचक्रवर्तिचरणारविन्दशेखरस्य
श्रीराजराजसूनोः श्रीत्रिविक्रमस्य कृतौ कादम्बरी-
कथासारसंग्रहाख्ये काव्ये अष्टमः सर्गः

---

1. वाराधतं चरण इति मातृका ।

## नवम: सर्ग:

तत: सन्ध्यामयूखेन रञ्जितं पश्चिमाम्बरम् ।
पुण्डरीकानुरागेण मच्चित्तमिव कातरम् ॥ १ ॥

विसृत्वरेण तमसा वेष्टितं भुवनत्रयम् ।
पुण्डरीकवियोगेन शून्यं चित्तमिवात्मन: ॥ २ ॥

अङ्कुरत्तारनिवहा सन्ध्या रागवती बभौ ।
पुण्डरीकानुसन्धानान्मूर्तिरुत्पुलकेव मे ॥ ३ ॥

पुण्डरीकवियुक्ताया हृत्पद्मेन समं मम ।
पद्मिन्या भानुभिन्नाया: पद्मा: समकुचन्निशि ॥ ४ ॥

पुण्डरीकस्य विरहाद्धूसरेव तनुर्मम ।
ऐन्द्री गर्भितशीतांशु: अधतत शनैर्हरित् ॥ ५ ॥

व्याकीर्णतिमिरं रेजे प्राच्या मूलं विपाण्डरम् ।
विप्रोषितपतेर्नार्या लम्बालकमिवाननम् ॥ ६ ॥

तम:प्ररोहकलुषा लेभे माघवती हरित् ।
पर्याविलप्रवाहेव प्रसादं सुरनिम्नगा ॥ ७ ॥

यामिनीसागरस्येव वेलापुलिनशालिनी ।
चन्द्रिकाधवला काष्ठा चकाशे शातमन्यवी ॥ ८ ॥

प्रभामण्डलमध्यस्थं प्रादुरासेन्दुमण्डलम् ।
जटावलयसंवीतं पुण्डरीकमुखं यथा ॥ ९ ॥

रोचिषा रजनी भर्तु: द्यौ: प्रसादं समानशे ।
कपिञ्जलस्य वचसा कलुषेव मतिर्मम ॥ १० ॥

उदितेनोडुनाथेन गाढोत्कण्ठाविधायिना ।
उदजृम्भत कामाग्निः [1]पवनेनेव पावकः ॥ ११ ॥

दिवि चन्द्रकरस्पर्शादहश्यन्त तनौ मम ।
इतस्ततश्च सञ्जाता स्फोटका इव तारकाः ॥ १२ ॥

ततोऽब्रुवं तरलिकां पुण्डरीके निबद्धधीः ।
बद्धभावा विरूपाक्षे विजयामिव पार्वती ॥ १३ ॥

हञ्जे तरलिके ! कामो बाधते मां हिमांशुना ।
निरङ्कुशेन हेमन्तो हिमेन नलिनीमिव ॥ १४ ॥

वेष्टिता चन्द्रकिरणैः प्रपीड्ये कामसायकैः ।
हरिणी वागुराबद्धा शातैर्व्याधशरैरिव ॥ १५ ॥

पुरश्चन्द्रः स्मरः पश्चान्मध्ये निपतिता तयोः ।
अहं कथं नु जीवामि मत्तयोरिव दन्तिनोः ॥ १६ ॥

यातुं स्थातुं न शक्नोमि ह्रिया च मदनेन च ।
अवपातगता सद्यो वन्येव [2]विवशावशा ॥ १७ ॥

कन्दर्पबाणविद्धाऽहं न्यपतं भुवि मूर्च्छिता ।
वैनतेयसमाक्रान्ता नागकन्येव विह्वला ॥ १८ ॥

प्रतिक्रियाभिराश्वस्तां चक्रे सा मां स्मरार्दिताम् ।
शफरीं ग्रीष्मसन्तप्तां वर्षाश्रीरिव वृष्टिभिः ॥ १९ ॥

आत्मना विधृताकारां शायितां स्मरसायकैः ।
[3]दुःखिता मामश्रुमुखीं दृष्ट्वा तरलिकाऽगदत् ॥ २० ॥

---

1. प्रपश्येनेवेति मातृका ।
2. विवशावशान इति मातृका ।
3. विलोक्य मा इति मातृका ।

नयामि यत्र ते कान्तस्तत्र त्वां कामकर्शिताम् ।
ग्रीष्मतापकृशां वृष्टिर्नदीमिव पयोनिधिम् ॥ २१ ॥

आनयाम्यहमत्रैव कामार्तायास्तव प्रियम् ।
दिवस्तपनतप्ताया रजनीव निशाकरम् ॥ २२ ॥

अगादिषं गतव्रीडा भूयस्तरलिकामिति ।
नय कान्तसमीपं मां चित्रलेखा यथोर्वशीम् ॥ २३ ॥

पुण्डरीकमदृष्ट्वाऽहं न जीवामीन्दुपीडिता ।
सन्दष्टा कृष्णसर्पेण बाला जाङ्गलिकं यथा ॥ २४ ॥

मातरं पितरं वाऽपि जीवितं चापि चञ्चलम् ।
पुण्डरीककृते सर्वं त्यजेयं नात्र संशयः ॥ २५ ॥

अदृष्ट्वाऽहं महाभागं न शक्नोम्यासितुं क्षणम् ।
अतिकन्दर्परूपं तं रम्भेव नलकूबरम् ॥ २६ ॥

इति निश्चितधीस्तस्मात्पुण्डरीकदिदृक्षया ।
अद्रिकूटान्मयूरीव प्रासादाग्रादवातरम् ॥ २७ ॥

दक्षिणं मे विधिवशादस्पन्दत विलोचनम् ।
नलिन्या मीनसंक्षोभात् स्पन्दमानमिवाम्बुजम् ॥ २८ ॥

दुर्निमित्तेन तेनात्मा [1]मम काममवेपत ।
नभस्वतेव तरले वयसि प्रथमा विधुः ॥ २९ ॥

पुण्डरीकमहं द्रष्टुमगां तरलिकान्विता ।
सचित्रलेखा कामार्ता बुधात्मजमिवोर्वशी ॥ ३० ॥

---

1. स्मृत्वा वाम इति मातृका ।

---

२४. जाङ्गलिकः विषवैद्यः ।

अन्वगान्मां तरलिका रत्नाभरणभूषिताम् ।
सुपुष्पितवनां लोभाद्भ्रमरीव मधुश्रियम् ॥ ३१ ॥

तस्यां श्रवणचुम्बिन्यां मञ्जर्यामतिलोलुपाः ।
अन्वयुर्मां मधुकरा लतां सञ्चारिणीमिव ॥ ३२ ॥

पद्मपत्रविशालाक्षीं प्रयान्तीं पल्लवाधराम् ।
मधुलक्ष्मीमिवापश्यन्नुद्यानवनदेवताः ॥ ३३ ॥

विलङ्घ्य पुष्पितप्रायां कल्पानोकहवारिकाम् ।
मधुव्रतीव सरसे पुण्डरीकेऽनुरक्तधीः ॥ ३४ ॥

हञ्जे! तरलिके कामं अर्धमार्गविलम्बजः ।
क्षणोऽप्यभिसरन्त्या मे कान्तं युगशतायते ॥ ३५ ॥

अपि नामायमिन्दुस्तं ममाभिमुखमानयेत् ।
प्रत्यूषे विप्रयुक्तायाः पद्मिन्या इव भास्करम् ॥ ३६ ॥

मया सार्धं तपति चेत्कामस्तं च तदा कृती ।
[1]व्योकारः परितप्तेन तप्तसंयोजनादिव ॥ ३७ ॥

त्यक्ष्याम्यहं प्रियाश्लेषात्कामजं सज्वरं क्षणात् ।
ओषधीशकरस्पर्शात् ग्रैष्मं [2]तापमिवौषधिः ॥ ३८ ॥

स्वयमेवागतां कान्तो वृषस्यन्तीति मां पुनः ।
जिह्रेमि धिक्करोतीति धनञ्जय इवोर्वशीम् ॥ ३९ ॥

तयाऽहं सँलपन्त्येवं औत्सुक्यादतिकातरा ।
आकृष्टेवेन्द्रियैरापमच्छोदसरसस्तटम् ॥ ४० ॥

1. व्योकारः परितप्तेन तप्तसंयोजयेव इति मातृका ।

2. तपरिवौषधीरिति मातृका ।

विप्रकर्षादविस्पष्टामाकर्ण्य रुदतीं गिरम् ।
किमिदं हेति संभ्रान्ता तमुद्देशमुपागमम् ॥ ४१ ॥

रे चन्द्र ! जन्मचाण्डाल ! हा किमाचरितं त्वया ।
हा दुराचार ! कन्दर्प ! ! दर्पादेवं त्वया कृतम् ॥ ४२ ॥

हा सरस्वत्यनाथाऽसि पुण्डरीकं विना कृता ।
उपग्रहीनेव लता हन्त ! शोच्यां दशां गता ॥ ४३ ॥

असहायोऽसि धर्म ! त्वं हाहा निष्ठुरकारिणा ।
पुण्डरीकेण रहितो जनोऽयमिव साम्प्रतम् ॥ ४४ ॥

तव कामाभितप्तस्य हन्त मृत्युरुपागतः ।
अकालाशनिपातोऽयं ग्रीष्मार्तस्य वनस्पतेः ॥ ४५ ॥

तपश्च ब्रह्मचर्यं च ज्ञानं चापि सहायुषा ।
महाश्वेतापरास्त्येन सर्वं कालेन संहृतम् ॥ ४६ ॥

त्वामदृष्ट्वा महाश्वेते ! पुण्डरीको दिवं गतः ।
इति निष्ठुरमश्रौषं क्रोशन्तं हा ! कपिञ्जलम् ॥ ४७ ॥

तस्य पापेन वचसा हृदि सन्ताडिता भृशम् ।
अपतं भुवि निःसंज्ञा स्वर्गाद्भ्रष्टेव देवता ॥ ४८ ॥

मूर्छितां धरणी पृष्ठे शयानां कीर्णकुन्तलाम् ।
गाढं तरलिकाऽऽलिङ्ग्य चक्रन्द कुररीव माम् ॥ ४९ ॥

तयैवाश्वास्यमानाऽह शनैः संज्ञामुपागमम् ।
मातङ्गकलुषा मन्दं प्रसादमिव निम्नगा ॥ ५० ॥

निर्विकल्पोऽथ मोहोऽपि न तथा मामबाधत ।
यथासंज्ञा पुनर्लब्धा दुःसहा तीव्रवेदना ॥ ५१ ॥

पुण्डरीकं समालोक्य मदर्थं गतजीवितम् ।
अस्फुरं शोकसन्तप्ता शफरीवोद्धृता जलात् ॥ ५२ ॥

पुण्डरीकेति नामोक्त्वा बाष्पगद्गदया गिरा ।
नाशकं साश्रुनयना भाषितुं न च वीक्षितुम् ॥ ५३ ॥

छिन्नहारलतं दोर्भ्यामाहत्योरःस्थलं मुहुः ।
मुक्तकण्ठं समाक्रन्दं [1]करिणीवावपातगा ॥ ५४ ॥

पुण्डरीकमुखं दृष्ट्वा शान्तालीव सरोरुहम् ।
मत्तेव लज्जां सन्त्यज्य शोकार्ता पर्यदेवयम् ॥ ५५ ॥

विलम्बिताहमस्मीति कोपात्किं मौनमाश्रितः ।
क्षम्यतामपराधो मे नाथ ! बद्धोऽयमञ्जलिः ॥ ५६ ॥

उत्तिष्ठ गाढमालिङ्ग्य परितापमपाकुरु ।
जातुषीपुत्रिकेवाहं विलीये विरहाग्निना ॥ ५७ ॥

वज्रादपि कठोरं हा कान्त ! चित्तमिदं मम ।
परासुं त्वां समालोक्य शतधा दलितं न यत् ॥ ५८ ॥

आभिजात्यं वधूधर्मं वृत्तं लज्जां विहाय च ।
द्रष्टुकामां कथं दासीं मामनापृच्छ्य गच्छसि ॥ ५९ ॥

दर्शयित्वैव मां बाणैस्त्वां हन्ति कुसुमायुधः ।
दीपकं स्थापयित्वाग्रे मृगयुर्हरिणं यथा ॥ ६० ॥

मद्वियोगासहिष्णुस्त्वं कान्त ! पञ्चत्वमागतः ।
अहमद्यापि जीवामि हा हन्त कठिनाः स्त्रियः ॥ ६१ ॥

---

1. करिणीवावपातस्था ! इति मातृका ।

---

५७. जातुषीपुत्रिका=लाक्षासालभञ्जिका ।

जननं मरणं लोके सहजं सर्वदेहिनाम् ।
एतावदेव दुःखं मे मामनालिङ्गय गच्छसि ॥ ६२ ॥

कथं श्लिष्येत्कथं चुम्बेत्कथं मामालपेदिति ।
वियत्संकल्प्य संप्राप्ता हा ! धिग्जीवितमस्थिरम् ! ॥ ६३ ॥

त्वया विरहिता कान्त ! नाहं जीवितुमुत्सहे ।
कूपदण्डेन सहिता मज्जन्ती नौरिवार्णवे ॥ ६४ ॥

तव कोपेऽपि मधुरं अनुग्र वश्यमाननम् ।
अनालोक्य महाश्वेता क्षणं जीवेत्कथं वद ॥ ६५ ॥

अहं त्वयैव जीवामि त्वन्तु नाथ ! मया विना ।
तटित्तिष्ठति मेघेन मेघोऽपि तटितं विना ॥ ६६ ॥

आविस्स्मितं मुखं सौम्यमर्धापाङ्गनिरीक्षणम् ।
साभिप्रायं च वचनं कस्मिन् जन्मनि लभ्यते ॥ ६७ ॥

हा ! दिवं गतशब्देन जीवितं न स्वयं गतम् ।
इदं प्रलपितं सर्वं करुणं कथयिष्यति ॥ ६८ ॥

कपिञ्जलः कथं न त्वां निरुणद्धि दिवङ्गतम् ।
ज्ञात्वाऽपि मदवस्थां हा ! त्वत्तोयं खलु निष्ठुरः ॥ ६९ ॥

मृग्यो दर्भान्परित्यज्य बाष्पपर्याकुलेक्षणाः ।
शोकार्ता विलपन्तीं मां पश्यन्त्यभिमुखं स्थिताः ॥ ७० ॥

पद्मिनीयं गतच्छाया म्लानपङ्केरुहानना ।
चक्रवाकरुतेनार्ता रोदितीव मया सह ॥ ७१ ॥

निर्झरास्राविलमुखाः शृङ्गाग्रोद्गतबाहवः ।
कीर्णमेघकचाः शोकादाक्रोशन्तीव पर्वताः ॥ ७२ ॥

श्रुत्वा रात्रिरियं क्षीणा दीनं मत्परिदेवितम् ।
पर्यस्तचन्द्रवदना समदुःखेव लक्ष्यते ॥ ७३ ॥

तिष्ठेत्सत्यं विना धर्मः तिष्ठेदिध्मं विनानलः ।
पुण्डरीकं विना देहे न तिष्ठेन्मम जीवितम् ॥ ७४ ॥

यत्र कान्त ! गतोऽसि त्वं तत्रैवानुगतास्म्यहम् ।
रत्नाकरं परित्यज्य कुतो यास्यति जाह्नवी ॥ ७५ ॥

जीवतीति महाश्वेता पुण्डरीकं विना क्षणम् ।
एतावतैव जिह्रेमि मरणं तु महोत्सवः ॥ ७६ ॥

कपिञ्जलं [1]परिष्वज्य तेनैव विवशापतम् ।
छिन्नमूलेन वृक्षेण लतेव धरणीतले ॥ ७७ ॥

सखा ते मां परित्यज्य कामबाणैर्दिवं गतः ।
गुरूपदेशाद्दुःखाढ्यां मुमुक्षुरिव संसृतिम् ॥ ७८ ॥

गतो भवतु मां त्यक्त्वा कालात्प्रणयिनं बहोः ।
कथं नु त्वां परित्यज्य निर्घृणः त्रिदिवं गतः ॥ ७९ ॥

शोकासहिष्णुः शोकार्तमेवमुक्त्वा कपिञ्जलम् ।
तया तन्व्या निषिद्धाऽपि मरणायोद्यताऽभवम् ॥ ८० ॥

तस्मिन्क्षणे बिम्बमनुष्णभानो-
भित्वा पुमा[2]न्कश्चन दिव्यमूर्तिः ।
स्वर्गात्पतन्देव इवास्त पुण्यो
ज्योतिष्पथाद्भूतलमाससाद ॥ ८१ ॥

१. परित्यज्य इति मातृका ।
२. न्दर्शन दिव्य इति मातृका ।

तप्त्वा तपस्तीव्रतरं चिराय
लब्ध्वा गिरीशस्य पुनः प्रसादम् ।
पुरा रतिः काममिवानुरूपं
कल्याणि ! कान्तं तव लप्स्यसे त्वम् ॥ ८२ ॥

इति ब्रुवन्मृत्युकृतोद्यमां मा-
मादाय दोर्भ्यामपि पुण्डरीकम् ।
खमुत्पपात क्षणलक्ष्यमूर्तिः
सर्पं गरुत्मानिव दिव्यवेगः ॥ ८३ ॥

मोहेन मां मीलितपद्मनेत्रां
सन्ध्याङ्गनां रागवतीं विहाय ।
अस्तंगतं भानुमिव प्रकाशः
कपिञ्जलोप्यन्वगमु जगाम ॥ ८४ ॥

तस्मिन्दिवं तेन सह प्रयाते
चिरंतनस्नेहवशेन शीघ्रम् ।
मृत्योरपि प्राणसमः स तस्मा
दत्यन्तमासीद्व्यथितं मनो मे ॥ ८५ ॥

शोकेन खिन्नामवनौ लुठन्तीं
व्याकीर्णकेशां परिधूसराङ्गीम् ।
आश्वसयन्मामसितेक्षणा सा
विद्येव बुद्धिं विषयेण मूढाम् ॥ ८६ ॥

अच्छोदनाम्नः सरसस्तटेऽस्मिन्
तया पुनस्तामरसायताक्ष्या ।
शोकेन कामं युगकोटिकल्पां
नीतावशिष्टां रजनीमनैषम् ॥ ८७ ॥

अन्येद्युरम्बासहितः पिता मे
कुतोऽपि वृत्तान्तममुं निशम्य ।
आसाद्य मां दुःखविमुक्तकण्ठ-
माक्रन्दमुच्चैः सुचिरं वितेने ॥ ८८ ॥

अनेकशः स्नेहवशात्पितृभ्यां
सामोत्तरैः साञ्जलिभिर्वचोभिः ।
अभ्यर्थिता नात्यजमात्मनोऽहं
स्थितिं धरित्रीव युगान्तपातैः ॥ ८९ ॥

परस्परं तौ परिरभ्य दोर्भ्यां
विवेष्टमानौ विवशं पृथिव्याम् ।
बाष्पायमाणौ पितरौ गताशौ
शोकाधिरूढौ स्वगृहानयाताम् ॥ ९० ॥

तदा प्रभृत्यस्तसमस्तभावा
बद्ध्वा जटा वार्धकशोभिनीश्च ।
जितेन्द्रियैः सञ्चरितुं न शक्यं
तपो महत्तप्तुमहं प्रवृत्ता ॥ ९१ ॥

त्रिसन्ध्यमस्मिन्सरसि प्रसन्ने
स्नात्वा च निर्वर्त्य फलेन वृत्तिम् ।
तया समं प्राणसमानयाऽहं
गुहामिमां केवलमध्यवात्सम् ॥ ९२ ॥

इतीरयन्ती करुणामवस्थां
प्रत्यक्षवद्वाक्नया [1]विभाव्य ।

---

1. विभाव्यः इति मातृका ।

हा पुण्डरीक! क्व गतोऽस्यनाथां
हित्वेति चक्रन्द विमुक्तकण्ठम् ॥ ९३ ॥

प्रनष्टसंज्ञामवनौ पतन्ती-
मादाय दोर्भ्यां सदयं दयालुः ।
तामङ्कमारोप्य निमीलिताक्षीं
रुरोद धीरोऽपि चिरं नरेन्द्रः ॥ ९४ ॥

ततस्तदीयं चरितं निशम्य
शोकेन [1]संप्राप्त इवाशु मोहम् ।
अधोमुखः पश्चिमशैलशृङ्गा-
दौदन्वतीष्वप्सु पपात भानुः ॥ ९५ ॥

आश्वास्यमाना नृपनन्दनेन
शोकेन कामं कलुषीकृतापि ।
विधिं विधिज्ञा विधिवद्विधाय
सान्ध्यं शनैराश्रममाससाद ॥ ९६ ॥

मार्गेण पश्चाद्विधिचोदितेन
समाप्य सान्ध्यं नियमं नरेन्द्रः ।
शिलातले कल्पयति स्म शय्यां
मृदीयसा चन्दनपल्लवेन ॥ ९७ ॥

या साक्षिणी ते विधिवैशसस्य
समानदुःखा क्व नु सा गतेति ।
शय्यागतस्तां शयनोपविष्टां
भूयोऽपि पप्रच्छ नरेन्द्रसूनुः ॥ ९८ ॥

---

1. संप्राप्तमिव इति मातृका ।

मया महात्मन्नमृतात्प्रसूत-
मारव्यातमित्यप्सरसां कुलं यत् ।
तस्मात्प्रसिद्धा मदिरेति नाम्ना
पद्मा पयोधेरिव कन्यकाऽभूत् ॥ ९९ ॥

तां कन्यकां रूपगुणैरनूनां
बिम्बाधरां यौवनबन्धुराङ्गीम् ।
शचीमिवेन्द्रो विधिनोपयेमे
महारथश्चित्ररथो महेच्छः ॥ १०० ॥

कन्दर्पकर्णीरथवैजयन्ती-
मासाद्य तामम्बुरुहायताक्षीम् ।
दिवस्पतेर्दिग्गजदीर्घहस्त-
स्वाराज्यलाभेऽपि च निस्पृहोऽभूत् ॥ १०१ ॥

गन्धर्वकन्याजनमौलिरत्नं
मुक्तेव रत्नाकरताम्रपर्ण्योः ।
तयोरभूत्तादृशयोस्सु[1] पित्रोः
कादम्बरीत्यप्रतिमा कुमारी ॥ १०२ ॥

आवर्तनाभिं कुमुदस्मिताभां
कोकस्तनीं कोकनदायताक्षीम् ।
अनुद्रुता मानसराजहंसा
यां पद्मिनीं जङ्गमपद्मिनीति ॥ १०३ ॥

ममापि तस्याश्च महानुभाव !
वियोगवार्ताश्रवणानभिज्ञम् ।

1. स्तुपित्रोःपित्रोरिति मातृका ।

अकृत्रिमं सख्यमहेतुपूर्वं
कुमुद्वतीचन्द्रिकयोरिवासीत् ॥ १०४ ॥

सा दुष्कृतिं मे विधिनोपनीता
मकाण्डनिर्घातनिपातघोराम् ।
श्रुत्वा प्रवाते कदलीव शोका-
दवेपतात्यन्तमरालकेशी ॥ १०५ ॥

कस्मै चिदम्बानुमतो वराय
बलेन मां दित्सति चेत्पिता मे ।
प्रायोपवेशेन विषेण वापि
मोक्ष्यामि दुःखानलदग्धमायुः ॥ १०६ ॥

अतः परं ब्रह्मणि लीनबुद्धिः
सखीव साहं च तपश्चरामि ।
इति प्रतिज्ञां स्थिरधीरकार्षी
त्सखीजनस्याग्रत एव बाला ॥ १०७ ॥

अथात्मनश्चित्ररथेन राज्ञा
निर्बन्धतः सान्त्वपरैर्वचोभिः ।
निवर्त्यमानापि न सा निवृत्ता
धृष्टा समुद्राभिमुखी नदीव ॥ १०८ ॥

अलङ्घयन्तीं निजसंविदं तां
वेलां समुद्रोर्मिमिवावलोक्य ।
वात्सल्यवान्वासुकितुल्यबाहु
रदूयतात्यन्तमहर्निशं सः ॥ १०९ ॥

उपेत्य गन्धर्वपतेः सकाशा-
त्कैलासनामा किल सौविदल्लः ।
अनामयप्रश्नपुरःसरं मां
मिताक्षरां वाचमवोचदेवम् ॥ ११० ॥

गन्धर्वराट् स्वामिनि ! मन्मुखेन
प्रेमोत्तरं त्वाममुमर्थमाह ।
वत्से ! मदुक्तं न शृणोति वत्सा-
स्नेहात्त्वयि ब्रह्मणि तिष्ठतीति ॥ १११ ॥

न युक्तमेतत्सखि ! साम्प्रतं ते
स एव धर्मो गुरुणा यदुक्तम् ।
तां दुष्प्रतिज्ञामपहाय तस्मा-
त्कल्याणि ! धर्मस्य मते स्थिता स्याः ॥ ११२ ॥

इत्थं सखीं सपदि मद्वचनाद्वदेति
सम्प्रेषिता तरलिकाऽपि मयाऽद्य तेन ।
पश्चाद्भवानुपगतो भुवमस्मदीया-
मेवं निगद्य विरराम तपस्विनी सा ॥ ११३ ॥

इत्थं तस्याश्चरितमखिलं शान्तमाकर्ण्य दीनः
तस्मिन्दिव्यप्रसवचरिते तल्पभागे निषण्णः ।
स्मारंस्मारं निजविधिबलं पत्रलेखां च सेनां
चन्द्रापीडो विरसमनयज्जाग्रदेव त्रियामाम् ॥ ११४ ॥

इति श्रीमत्सकलविद्याधरचक्रवर्तिचरणारविन्दशेखरस्य
श्रीराजराजसूनोः श्रीत्रिविक्रमस्य कृतौ कादम्बरी-
कथासारसंग्रहाख्ये काव्ये नवमः सर्गः ।

## दशमः सर्गः ।

महाश्वेतां तरलिका ततः केयूरकान्विता ।
सन्मन्त्रानुगता नीतिर्नृपश्रियमिवासदत् ॥ १ ॥

प्रणम्य सा महाश्वेतां चन्द्रापीडं सविस्मयम् ।
अनुग्रहाय संप्राप्तं तस्याः काममिवैक्षत ॥ २ ॥

पश्चाद्दूंशकरीराहो नत्वा केयूरकोऽपि ताम् ।
चन्द्रकान्तशिलापट्टे चन्द्रे मृग इवासदत् ॥ ३ ॥

कच्चिच्चित्ररथो राजा कुशली कुशलाग्रणीः ?
कच्चित्कुशलिनी देवी मदिरा मदिरेक्षणा ? ॥ ४ ॥

कादम्बरी कुशलिनी कच्चित्प्रियसखी मम ?
इति पृष्टा तया बाला सर्वेषां वार्तमब्रवीत् ॥ ५ ॥

किन्तु यत्कथितं कार्यं कादम्बर्यै प्रशंसितुम् ।
विग्राह तत्र सा चेति सेयं प्रपच्छ तां पुनः ॥ ६ ॥

यस्तया प्रेषितः स्नेहात्सन्देश इव मूर्तिमान् ।
स एष कथयेत्सर्वमित्युक्त्वा विरराम सा ॥ ७ ॥

स्वामिनी मद्गिरैव त्वां कुशलं परिपृच्छति ।
मयूरकेकया तप्ता मही कादम्बिनीमिव ॥ ८ ॥

यत्सन्दिष्टं प्रियसखि ! त्वया तरलिकामुखात् ।
तत्किं गुरुजने निन्दा किं वा स्वातन्त्र्यमात्मनः ॥ ९ ॥

आवयोरेकमायुश्चेज्ज्योतिः काकदृशोरिव ।
तव दुःखं यदुत्पन्नं तत्कथं न भवेन्मम ॥ १० ॥

स्वस्थोऽपि को मतिं कुर्यादस्वन्ते कर्मणीदृशे ।
दुःखाभिभूतहृदयः किमुतास्मद्विधो जनः ॥ ११ ॥

सहजप्रेमनिष्यन्दनिर्भरं हृदयं पुनः ।
अतिनिष्ठुरतां प्राप्तं कथमेकपदे तव ॥ १२ ॥

केयूरके वदत्येवं ततः संचिन्त्य सा क्षणम् ।
अहमागत्य वक्ष्यामीत्युक्त्वा तं प्राहिणोत्पुनः ॥ १३ ॥

इतो गन्धर्वलोकं त्वं मया संप्राप्तुमर्हसि ।
प्रस्थात्प्रस्थान्तरं मेरोः सन्ध्ययेव प्रभाकरः ॥ १४ ॥

इत्युक्तोऽनुपदं राजा तस्मात्सार्धं तयोत्थितः ।
वर्षाश्रिया नभोमार्गे गर्जन्निव गिरेर्घनः ॥ १५ ॥

स महाश्वेतया सार्धं द्रष्टुं कादम्बरीं ययौ ।
औत्सुक्यादुत्तरामाशां भास्वानिव मधुश्रिया ॥ १६ ॥

स्पृष्ट्वा गङ्गापयः शीतं आधूय हरिचन्दनान् ।
शिषेविरे तं क्लान्ताश्च कैलासतटवायवः ॥ १७ ॥

तन्मुखाद्दुर्लभान्लोके श्रुत्वा कादम्बरीगुणान् ।
तद्भावरज्ज्वेवाकृष्टो हेमकूटमवाप सः ॥ १८ ॥

दीर्घिका मज्जतां यत्र जन्मान्तरमलापहाः ।
अभीष्टफलदाः पुंसां यत्रोद्यानमहीरुहाः ॥ १९ ॥

नित्ययौवनयोर्यत्र दम्पत्योः प्रेमनिघ्नयोः ।
न विप्रलम्भः शृङ्गारः स्वप्नेऽपि विरहः कुतः ॥ २० ॥

ध्वजाग्रोल्लिखिताकाशं विचित्रमणितोरणम् ।
नृपश्चित्ररथागारं सप्राकारं व्यलोकयत् ॥ २१ ॥

पुरस्कृत्य स तां कन्यामविशत्कन्यकापुरम् ।
दुष्प्रवेशं बुधः शास्त्रं प्रतिभां निर्मलामिव ॥ २२ ॥

सोऽपश्यत्कन्यकां लज्जामादधानां रतेरपि ।
के[1]यूरकं तां पृच्छन्तीं मुहुरात्मगुणोदयान् ॥ २३ ॥

प्लुष्टस्य हरनेत्रेण सख्युः सञ्जीवनेच्छया ।
सम्पादितां वसन्तेन मृतसञ्जीविनीमिव ॥ २४ ॥

शृङ्गारमूलकन्दस्य जयिनः पुष्पधन्वनः ।
संमोहनायुधस्येव प्रत्यक्षामधिदेवताम् ॥ २५ ॥

चलत्तरङ्गभ्रूभङ्गां स्फुटद्वन्द्वचरस्तनीम् ।
आवर्तनाभिकुहरां कान्तिसिन्धुमिवापराम् ॥ २६ ॥

तस्याः कुरङ्गशावाक्ष्या नेत्रासेचनकं वपुः ।
निध्याय प्रमनाः कामं पुनरेवमतर्कयत् ॥ २७ ॥

अवदातं कृतं कर्म किमनेनाद्य चक्षुषा ।
पश्यामि [2]दुर्लभं लोके येन दिव्यमिदं वपुः ॥ २८ ॥

अपारामृतसिन्धुः किं स्थेयसी किं तटिल्लता ।
मदिरा किं दृशा पेया ज्योत्स्ना किमियमक्षया ॥ २९ ॥

कामस्य सायकः षष्ठः कृतान्तस्यान्यदायुधम् ।
मधुरः कालकूटः किं केयं गन्धर्वसुन्दरी ॥ ३० ॥

उत्पन्ना किमियं बाला लक्ष्मीर्मधुमयाम्बुधेः ।
माधुर्यादत एवाशु मदयत्यात्मनो मनः ॥ ३१ ॥

---

1. केयूरकान्तां इति मातृका । 2. दुर्बलमिति मातृका ।

---

२७. नेत्रासेचनकं नयनयोरत्यन्ततृप्तिकरम् ।
"तदासेचनकं तृप्तेर्नास्त्यन्तो यस्य दर्शनात् ॥"

अस्तु कादम्बरी साक्षान्नैव नाम्नार्थतोऽपि च।
चित्तं दर्शनमात्रेण कथमुल्लासयत्यसौ ॥ ३२ ॥

अहो! पद्मेन किं तेन [1]दुष्करं सुकृतं कृतम्।
अस्या मुखेन सादृश्यं लभेत कथमन्यथा ॥ ३३ ॥

दृष्टिरेवातिदीर्घेयमवतंसपदं गता।
हारेण किं वतंसेन पुनरुक्तिविधायिना ॥ ३४ ॥

अस्याः सर्वानवयवान् तांस्तानतिमनोहरान्।
पश्यतामुपमानानि ध्रुवं यान्त्युपमेयताम् ॥ ३५ ॥

श्रुत्वा लोकोत्तरामेनां मच्चित्तं लिखति स्म याम्।
अस्या विसदृशीमूर्तिः सा दास्यमपि नार्हति ॥ ३६ ॥

एषा पद्मप्रभाचोरैः कटाक्षैर्मधुवर्षिभिः।
सचेतसः कस्य भृशं न करोति रसार्द्रताम् ॥ ३७ ॥

ततस्तां तत्समानीतः कन्यकामासदन्नृपः।
वीचिसम्प्रेरितो मन्दं राजहंस इवाब्जिनीम् ॥ ३८ ॥

अथ रोमोद्गमः पूर्वं ततो [2]भूषणसिञ्जितम्।
सा[3] च कादम्बरी पश्चात्समुत्तस्थौ ससंभ्रमम् ॥ ३९ ॥

कादम्बरी समुत्थाय सखी[4]मस्वजदादरात्।
सा तामपि परिष्वज्य व्याहार्षीद्वरवर्णिनीम् ॥ ४० ॥

सखि! कादम्बरि! ख्यातस्तारापीडास्त्रिविष्टपे।
महात्मा भारते वर्षे राजा सत्यपराक्रमः ॥ ४१ ॥

1. दुर्लभमिति मातृका। 2. भाषणसिञ्जितमिति मातृका। 3. साध्वस्का... इति मातृका। 4. मस्वजनादरात इति मातृका।

तस्य शक्रप्रभावस्य चन्द्रापीडोऽयमात्मजः ।
चरन्दिग्विजयायोर्वीं दिष्ट्या देशमिमं गतः ॥ ४२ ॥

विधिवत्पूजयित्वाऽमुं श्रुत्वास्य चरितं महत् ।
पश्चान्मदीयदुष्कर्म सर्वमस्मै न्यवेदयम् ॥ ४३ ॥

एष दर्शनमात्रेण त्यक्त[1]सङ्गां च मे मतिम् ।
सूचीमयस्कान्त इव स्ववशं कुरुते गुणैः ॥ ४४ ॥

भवत्या मन्मुखेनैव श्रुत्वा लोकोत्तरान्गुणान् ।
[2]देहबन्धुरिव स्नेहात्त्वामिह द्रष्टुमागतः ॥ ४५ ॥

यथा सखि! मयि प्रीतिरस्मिन् राज्ञि तथास्तु ते ।
चन्द्रिकायां कुमुद्वत्या तुल्या चन्द्रेऽपि सा ननु ॥ ४६ ॥

भाग्यं भारतवर्षस्य विधातुः सृष्टिकौशलम् ।
लक्ष्म्याः स्थानाभिलाषं च त्वमालोकय सुन्दरि! ॥ ४७ ॥

ततो निमेषरहितैर्विश[3]द्भिर्भावमान्तरम् ।
अपाङ्गैरसितापाङ्गी ह्रीलोलैस्तं व्यलोकयत् ॥ ४८ ॥

परस्परमनृप्तैस्तौ रसं सञ्चुप्य लोचनैः ।
अतिष्ठतामभिमुखौ लज्जाविपरिवर्तितैः ॥ ४९ ॥

[4]अन्योन्यरागसंदब्धौ परिवारेषु सत्स्वपि ।
नेत्रैरुत्पक्ष्मभिः स्वैरं सँल्लापं तौ वितेनतुः ॥ ५० ॥

स्निग्धया दीर्घया कामं प्रसादामलया दृशा ।
इन्दीवरस्रजेवैनं वव्रे कादम्बरी वरम् ॥ ५१ ॥

---

1. त्यक्तसङ्गाचेति मातृका । 2. देहबन्ध इव मातृका । 3. पुमद्भिरिति मातृका । 4. अयमर्धश्लोको मूलेऽनुपलब्धो मया संप्रथितः ।

केयूरकेण कथितः सोऽयं किं नृपनन्दनः ।
यं दृष्ट्वा सिन्धुवेलेव चन्द्रमन्तर्न माति मुत् ॥ ५२ ॥

एकत्र पक्षपातश्चेदेवं सर्गगुरोर्विधेः ।
कुलाङ्गनानां मुग्धानां का गतिर्मरणादृते ॥ ५३ ॥

प्रतिज्ञामन्यथाकर्तुं किं मे कामः समागतः ।
प्रसादयितुमेनां वा दुःखितामित्यचिन्तयत् ॥ ५४ ॥

करेण गाढमालिङ्ग्य शंखकङ्कणिका पुनः ।
कादम्बरीं महाश्वेता प्रप्रच्छानामयं मुहुः ॥ ५५ ॥

अमेयकुशलं जातमभीष्टजनदर्शनात् ।
विलज्जमानाप्येवं सा कृच्छ्रादिव जगाद ताम् ॥ ५६ ॥

तस्याः प्रतिवचः श्रुत्वा महाश्वेता कुशाग्रधीः ।
किञ्चिद्विवृत्तवदना चन्द्रापीडमुदैक्षत ॥ ५७ ॥

ततस्तयोर्निषेदुष्योरन्योन्यमनुरक्तयोः ।
निषसाद नृपो मध्ये दिवसः सन्ध्ययोरिव ॥ ५८ ॥

कादम्बरी तपस्विन्याः पादौ प्रक्षाल्य वारिणा ।
उत्तरीयेण संमार्ज्य पुनरासनमासदत् ॥ ५९ ॥

कादम्बर्याः सखी कापि मदलेखेति विश्रुता ।
अनिच्छतोऽपि नृपतेः प्रक्षालितवती पदे ॥ ६० ॥

ततः स्वीकृत्य ताम्बूलमूर्मिकारत्नरञ्जितम् ।
राज्ञे कादम्बरीमूर्तमनुरागमिवार्पयत् ॥ ६१ ॥

६१. ऊर्मिका अङ्गुलीयकम् ।

ततः संप्राप्य संक्रुद्धा मञ्जुवाकापि शारिका ।
[1]शुकेनानुद्रुताऽन्येन सासूयमिदमब्रवीत् ॥ ६२ ॥

त्वं भर्तृदारिके ! धूर्तं न वारयसि चेदमुम् ।
त्यक्ष्याम्यसंशयं प्राणानद्य सत्यं त्वया शपे ॥ ६३ ॥

मदलेखे ! किमाहेति पृष्टा तापस[2]कन्यया ।
इति सा सर्वमाचख्यौ शारिकाकोपकारणम् ॥ ६४ ॥

एषा स्वामिनि ! सख्या ते कालिन्दी नाम शारिका ।
शुकस्य परिहासस्य ग्राहिता गृहिणीपदम् ॥ ६५ ॥

दृष्ट्वा लपन्तमश्लीलं तं तदालिकया रहः ।
न स्नातीयं न भुङ्क्ते च न किञ्चिद्वक्ति खण्डिता ॥ ६६ ॥

तच्छ्रुत्वा धरणीपालो लज्जापारिप्लवेक्षणम् ।
कादम्बर्या मुखं वीक्ष्य किंचिदस्मयतास्फुटम् ॥ ६७ ॥

कश्चिदत्रान्तरे प्राप्य कञ्चुकी प्रश्रयोत्तरम् ।
प्रणिपत्य महाश्वेतां व्यज्ञापयदिदं वचः ॥ ६८ ॥

देवी च मदिरा देवो नाथे ! त्वां द्रष्टुमुत्सुकौ ।
प्रभा च भगवान्भानुः सन्ध्यां प्राभातिकीमिव ॥ ६९ ॥

क्रीडाशैले कुमारोऽत्र विचित्रमणिमण्डपे ।
करोतु वासमित्युक्त्वा सा तेन सह निर्ययौ ॥ ७० ॥

केयूरकेण सन्दिष्टमार्गः क्रीडाद्रिमण्टपम् ।
मृगेन्द्र इव स प्राप कल्याणगिरिकन्दरम् ॥ ७१ ॥

---

1. शुकेनानुद्रुते ऽन्यान इति मातृका । 2. कन्यका इति मातृका ।

---

६५. परिहासस्य परिहासाह्वयस्य शुकस्य ।

कादम्बरी च प्रासादमारुह्य मदनातुरा ।
कुमारे बद्धभावैवममीमांशिष्ट दुःखिता ॥ ७२ ॥

न श्रुतो न च दृष्टोऽयं नानुभूतो न च स्मृतः ।
तथाप्युत्कलिकारूढं चित्तमेनं न मुञ्चति ॥ ७३ ॥

स्नेहः कामकृतः प्रायो दर्शनादेव जायते ।
अत एव महाश्वेता दुष्करे तपसि स्थिता ॥ ७४ ॥

पूर्वं सख्यास्तपः श्रुत्वा लज्जासीन्मम चेतसि ।
इदानीं तद्वियुक्तायां निन्दा च हतजीविते ॥ ७५ ॥

महाश्वेता प्रिये याते कठिना तपसि स्थिता ।
अहमेनं परित्यज्य न क्षणं जीवितुं क्षमा ॥ ७६ ॥

इङ्गितज्ञा महाश्वेता मद्भावं न न वेत्ति हि ।
अनुभूतरसामेनां निह्नोतुं कथमीश्वरी ॥ ७७ ॥

संविदं तादृशीं कृत्वा सखीनामग्रतः पुरा ।
पश्येयमद्य निर्लज्जा कथं तासां मुखान्यहम् ॥ ७८ ॥

प्रिये क्षणवियुक्तेऽहं पुटपाकदशां गता ।
सखी दिवं गते कान्ते कथं जीवति निष्ठुरा ॥ ७९ ॥

न शक्ता विषयादक्षं निवारयितुमुद्धतम् ।
संच्छिन्नरश्मिरपथात्सादीव जविनं हयम् ॥ ८० ॥

प्रियाय प्रेषितं चित्तं न निवर्तयितुं क्षमा ।
लक्ष्याय प्रहितं मध्ये धनुष्मानिव सायकम् ॥ ८१ ॥

स्मरार्ता जालमार्गेण पश्यन्ती मणिमण्डपम् ।
अतिष्ठदातपक्लान्ता मयूरीव नवाम्बुदम् ॥ ८२ ॥

अत्रान्तरे कुमारोऽपि मणिसौधाद्विनिर्ययौ ।
उद्यानमुत्सुको द्रष्टुं मेघादिव दिवाकरः ॥ ८३ ॥

कुमुद्वतीव शीतांशुं पद्मिनीवांशुमालिनम् ।
सा तं विकस्वरमुखी दृष्ट्वा मोदमुपागमत् ॥ ८४ ॥

[1]अनुभूतिमिव प्राज्ञ उन्मत्त इव चेतनाम् ।
वेलामिवाब्धिपतितो दृष्ट्वा तां मुमुदे नृपः ॥ ८५ ॥

दूरस्थितावपि स्नेहात्तौ परस्परमुन्मुखौ ।
नयनाम्बुजनालाभ्यां प्राप्तमपिबतां रसम् ॥ ८६ ॥

तयोरेकात्मनोः प्रेम्णा निरुद्धाशेषकर्मणोः ।
सर्वेन्द्रियाणि शून्यानि चक्षुषी प्राविशन्निव ॥ ८७ ॥

दौवारिकीविनिर्दिष्टा महाश्वेताऽगताऽथ सा ।
मनोरथादिव भ्रष्टा मञ्चान्मन्दमवातरत् ॥ ८८ ॥

सखीजनस्य वचसा चक्रे सा स्नानभोजनम् ।
हुङ्कारेणेव कबलं करिणीव निषादिनः ॥ ८९ ॥

स्नातानुलिप्तो भुक्त्वा च सार्धं केयूरकेण सः ।
उद्यानभूमिमविशद्वसन्तेनेव मन्मथः ॥ ९० ॥

मदलेखां नृपोऽपश्यत्कन्यकावृन्दसंवृताम् ।
ता[2]रकाजनसङ्कीर्णां नक्तं चन्द्रकलामिव ॥ ९१ ॥

मधुरं मधुराकारा मदलेखा मदालसा ।
आजानुबाहुमाचख्यौ राजानं रचिताञ्जलिः ॥ ९२ ॥

1. अनुभूतमिव प्राज्ञा इति मातृका ।
2. तारकाजनसङ्कीतामिति मातृका ।

सर्वेषां रत्नजातानां शेषत्वाच्छेषवाचकः ।
समुद्रमथनोत्पन्नो हारः कौस्तुभसोदरः ॥ ९३ ॥

वरुणायाब्धिना दत्तः तेन चित्ररथाय च ।
कादम्बर्यै पुनस्तेन तया तुभ्यं प्रदीयते ॥ ९४ ॥

सत्यमेवामुना भीरुः स्नेहव्यतिकरेण सा ।
कृतापराधमात्मानं मन्यते मदिरेक्षणा ॥ ९५ ॥

इत्युक्त्वा रोचिषा स्वेन लिम्पन्तमिव रोदसी ।
कीर्तिबीजमिवामुष्य हारं सा प्रत्यपादयत् ॥ ९६ ॥

कादम्बरीं ततः प्राप्ता मदलेखा नृपात्मजात् ।
दशात्यये शशिकला प्रतीचीमिव भास्वतः ॥ ९७ ॥

भ्रस्यदंशुवल्यो विशांपति-
वीक्ष्य चित्ररथनान्दिनीमिव ।
रागबन्धमपरां दिगङ्गनां
प्राप्य भानुरपि तत्क्षणं ययौ ॥ ९८ ॥

चक्रवाकमवलोक्य सस्पृहं
प्रेयसीविरहविह्वलो मुहुः ।
अस्तभूधरगभस्तिमालिनो-
रन्तरालममिमीत चक्षुषा ॥ ९९ ॥

राजसूनुरिव रागवान्रवि-
श्शम्बरारिशरपातशङ्कितः ।
द्रष्टुकाम इव पाथसां निधौ
मज्जति स्म वरुणालयाङ्गनाम् ॥ १०० ॥

कज्जलैरिव विलिप्तमम्बरं
द्यौरिव क्षितितलं समाश्रिता ।
मीलिता इव दिगङ्गनादृश-
स्तेजसामधिपतौ तिरोहिते ॥ १०१ ॥

यामिनीसहचरोऽपि तत्क्षणा-
दध्यरुक्षदुदयाद्रिमण्डपम् ।
मीनकेतुरपि जेतुमङ्गनाः
केलिकुण्डलितकार्मुकोऽभवत् ॥ १०२ ॥

उत्थिते स्मरसखे निशाकरे
मानिनीकठिनमानहारिणि ।
आर्द्रभावमभजन्मृगीदृश-
श्चन्द्रकान्तशिलया समं मनः ॥ १०३ ॥

चक्रवाकमिथुनं विलोक्य सा
विप्रयोगविरसाशयं पुरः ।
स्वां दशामपि निशाम्य [1]दुःसहं-
तापमाप सुतरां तलोदरी ॥ १०४ ॥

निर्जगाम निजमन्दिरान्तरा-
द्द्रष्टुमुत्कलिकया नृपं वधूः ।
पङ्कजातपरिमलाधिवासितं
चूतमिष्टविव षट्पदाङ्गना ॥ १०५ ॥

अन्विता कतिपयैः सखीजनैः
केलिशैलसविधं समेत्य च ।

1. दुस्सहा इति मातृका ।

आरुरोह मणिसौधमङ्गना
मेघवृन्दमिव चन्द्रमःकला ॥ १०६ ॥

तत्र वीक्ष्य नरपालनन्दनं
प्रेमनिश्चलनिबद्धलोचनम् ।
पादुकां मणिमयीं विसृज्य सा
साध्वसेन शनकैरुपागतम् ॥ १०७ ॥

तां विलोक्य तरुणीं नरेश्वरः
कामबाणपरिभूतमानसः ।
वारिधौ निपतितो यदृच्छया
[1]प्राप्य नावमिव किञ्चिदश्वसत् ॥ १०८ ॥

उत्थितेन नरपालसूनुना
प्रेमपूर्वमुपनीतमासनम् ।
पाणिना मुखरकङ्कणेन सा
सन्निरुध्य निषसाद भूतले ॥ १०९ ॥

लोलकुन्तलमधीरलोचनं
मञ्जुवाणि मधुरस्मितोदरम् ।
अच्छगन्धमरुणाधरं नृप-
श्चक्षुषा प्रियतमामुखं पपौ ॥ ११० ॥

चन्दनं सुरभि माल्यमुज्ज्वलं
पीठिकां च घनसारमिश्रिताम् ।
गृह्णती परिजनात्स्वयं वधूः
कामिने प्रणयपूर्वमर्पयत् ॥ १११ ॥

1. प्राप्तनावमिव इति मातृका ।

पश्यति प्रियतमे कृशोदरी
नाभिदेशमुपदेशपूर्वकम् ।
कानि कानिचन लज्जया क्षणं
[1] प्रेमनम्रवदना चकार सा ॥ ११२ ॥

विप्रयोगविरसा मुहुर्मुहुः
संगमस्मरणमात्रनिर्वृता ।
प्रीतिरेवमुभयोः समेधतां
चक्रयोः प्रणयनिघ्नयोरिव ॥ ११३ ॥

इङ्गिताकृतिविशेषवेदिनि
प्रेमशालिनि गुणानुरागिणि ।
एवमुक्तवति तत्सखीजने
प्रत्युवाच नृपनन्दनः प्रियाम् ॥ ११४ ॥

दर्शनात्प्रभृति देवि ! केवलं
[2] नूनमस्मि परितप्तमानसः ।
आभिरत्र तु बहूक्तिभिः कृतः
जीविते विवरवानयं जनः ॥ ११५ ॥

क्षणमपि च निषण्णा तत्र सन्त्यज्य कान्तं
विरसतरसखी [3]वाक्प्रेरिता निर्ययौ सा ।
अभिमतमदगन्धं कर्णतालप्रनुन्ना
[4] द्विरदपतिकपोलं दुःखिता षट्पदीव ॥ ११६ ॥

---

1. साविनम्र इति मातृका ।
2. नाहमस्मि विपरीत इति मातृका ।
3. सखीवाक्य इति मातृका ।
4. द्विरदवति इति मातृका ।

अथ वरतनुं स्मारं स्मारं स चित्ररथात्मजां
मनसिजशरैर्विद्धो मर्मण्यनुक्षणमायतैः ।
कनकवलयं सिञ्चन्बाष्पैर्विवर्णमणिप्रभं
रुदितशरणो रात्रिं दीर्घां निनाय विशांपतिः ॥ ११७ ॥

इति श्रीमत्सकलविद्याधरचक्रवर्तिचरणारविन्दशेखरस्य
श्रीराजराजसूनोः श्रीत्रिविक्रमस्य कृतौ
कादम्बरीकथासारसंग्रहाख्ये काव्ये
दशमः सर्गः



## एकादशः सर्गः

अथापरेद्युः प्रणयेन देवीं
दर्दर्श हंसात्मजया निषण्णाम् ।
प्रियंकरिण्या शरदा समेतां
स पद्मिनीं प्रातरिवांशुमाली ॥ १ ॥

अनायका मत्पृतना निकाम-
मनाविका नौरिव सिन्धुराजे ।
अमार्गगा स्यादत एव यामी-
त्युवाच तां हंससुतां कुमारः ॥ २ ॥

वियोगखिन्ना नरनाथसूनुं
व्यलोकयन्म्लानमुखी कुमारी ।
किरातभीता हरिणीव कान्तं
प्रवातनीलोत्पललोलनेत्रा ॥ ३ ॥

तस्याः समालोक्य च भावजात-
मकृत्रिमप्रेमभवं कुमार्याः ।
मिताक्षरं हंससुता मितार्थं
नरेश्वरं वाक्यमिदं बभाषे ॥ ४ ॥

त्वं यासि चेद्याहि महानुभाव !
न युक्तमेव प्रणयं निषेद्धुम् ।
[1]भूयात्पुनर्दर्शनमावयोस्ते
तवापि भूयात्प्रणयोऽनुरूपः ॥ ५ ॥

---

1. आसीः पुनर्दर्शनमस्मदीयं ।
तथापि भूयात्प्रणयानुरूपः ॥ इति मातृका !

कुमुद्वतीचन्द्रिकयोरिवेन्दौ
[1]तयोरिवेन्दोरितरेतरेण ।
साधारणा नः प्रणयप्रवृत्ति-
रित्येवमाभाष्य नृपः प्रतस्थे ॥ ६ ॥

आगोपुराघाटभुवोऽनुरागा-
त्सखीभिरन्तः पुरचारिकाभिः ।
अनुद्रुतोऽभून्नरनाथसूनुः
शनिधिः कलानामिव कृत्तिकाभिः ॥ ७ ॥

अच्छोदतीरे स्थितिमेयिवांस-
मार्धानमध्वानमसौ विलङ्घ्य ।
[2]अनाथदीनं दिवसावसाने
प्रजेश्वरः सैन्यनिवेशमाप ॥ ८ ॥

जनाः समुद्गीर्णमहःप्रभावा-
दधृष्यमालक्ष्यमुखप्रसादाः ।
उपप्लवान्मुक्तमिवांशुमन्तं
ननन्दुरालोक्य नरेन्द्रसूनुम् ॥ ९ ॥

स किन्नरद्वन्द्वविलोकनादि
कादम्बरीदर्शनकौतुकान्तम् ।
शंसंश्चरित्रं स्वमभूतपूर्वं
द्वित्राणि मित्राय दिनान्यनैषीत् ॥ १० ॥

1. तयोरिवेन्दौ इतरेतरेण इति मातृका । 2. अनाथ्यधार्मिति मातृका ।

६. अयं श्लोकः एवमपि पठितुं शक्यते :--
कुमुद्वतीचन्द्रिकयोरिवेन्दोस्तयोरिवेन्दावितरेतरेण ।

७. आघाटभूः सीमाप्रदेशः

तं स्रस्तकेयूरमुपेत्य तूर्णं
केयूरकश्चित्ररथात्मजायाः ।
निसर्गसिद्धप्रणयप्रवृद्धं
सन्तापमस्मै कथयांबभूव ॥ ११ ॥

अथ प्रयाते सति देव! देवी
समुत्सुका तुङ्गमुपेत्य हर्म्यम् ।
अनुद्रुता सा मनसा भवन्त-
मतिष्ठदालोक्य तमेव मार्गम् ॥ १२ ॥

क्रीडाद्रिमासाद्य ततः सखीभि-
[1]स्तं तं प्रदेशं भवता स्थितं सा ।
सोत्कण्ठमुद्वीक्ष्य च तत्र तत्र
बाला चिरेणाश्रुमुखी स्थिताऽभूत् ॥ १३ ॥

हर्म्याच्च कल्पद्रुमवाटिकां सा
हर्म्यं च कल्पद्रुमवाटिकायाः ।
तल्पाच्च वापीमपि वापिकाया-
स्तल्पं प्रयान्ती दिवसान्यनैषीत् ॥ १४ ॥

तस्मात्स तस्याः परितापवेगं
निशम्य सन्तप्तमना निकामम् ।
प्रियां दिदृक्षुः प्रियदर्शनस्तां
सपत्रलेखः सहसा जगाम ॥ १५ ॥

हैमे गृहे तापवशात्कृशाङ्गी-
मास्तीर्णरम्भास्तरणे निषण्णाम् ।

1. स्तन्त्रं प्रदेशमिति मातृका ।

कलां हिमानीकलुषामपश्य-
द्दर्शात्ययेन्दोरिव राजसूर्यः ॥ १६ ॥

सन्तापतः क्षाममपि प्रकामं
तस्या वपुर्मङ्गलमात्रभूषम् ।
संस्कारवद्रत्नमिव प्रभाभि-
र्विशेषदृश्यं नृपतेर्बभूव ॥ १७ ॥

म्लायन्मुखाब्जं बिसभङ्गभूष-
मागण्डलम्बालकमाकुलाक्षम् ।
स्रस्तां समुद्यत्परितापमस्या
गात्रं दृशोः संवननं बभूव ॥ १८ ॥

तैस्तैरुपायैरपि सान्त्ववाक्यैः
सखीजनानां विनयानुरूपैः ।
सन्तापशान्तिं प्रतिपाल्य तस्याः
स तत्र कांश्चिद्दिवसाननैषीत् ॥ १९ ॥

सपत्रलेखां सविधे निवेश्य
वियोगभीरोरगमत्प्रियायाः ।
अहर्व्यपाये प्रवसन्पतङ्गः
त्विषं स्वकीयामिव दीपिकायाम् ॥ २०

विचित्रकूटादथ हेमकूटा-
द्विनिर्गतः प्राणसमां विहाय ।

१८. संवननं वशक्रिया ।

१९. अत्र पूर्वार्धः प्रमादात्, द्विवारं लिखितो दृश्यते मातृकायाम् यस्मात् तेन क्रमेण सर्गान्ते अर्धभागोऽवशिष्येत इत आरभ्य प्रतिश्लोकमन्वयो बाध्येत च, अत. सः अस्माभिरपनीतः ।

स दक्षिणां दीधितिमानिवाशां
जगाम कैलासतटेन धीरः ॥ २१ ॥

नृत्यन्तमग्रे निजवल्लभाया-
वितत्य बर्हं विपिने मयूरम् ।
मुदं ययौ वीक्ष्य कुमारकल्पः
कुमारपत्रं सदयं कुमारः ॥ २२ ॥

स सल्लकीमभ्रमुहस्तदत्तां
क्रोधादनादृत्य [1]धरेन्द्रसानौ ।
दृष्ट्वा स्वबिम्बं परिमाणमुच्चैः
कुर्वाणमैरावणमीक्षते स्म ॥ २३ ॥

हरोपवाह्यं हरसूनुकल्पः
कुर्वन्तमद्रौ तटघातलीलाम् ।
साक्षाद्द्रपुष्मन्तमिवावलेप-
मग्रे ककुद्मन्तमवेक्षते स्म ॥ २४ ॥

निशम्य निर्वातविभीषणानि
दिगन्तदन्तावलबृंहितानि ।
स गन्धशैलं प्रहरन्तमुच्चै-
र्व्यलोकयत्सिंह [2]शिशुं नृसिंहः ॥ २५ ॥

स मानसे वीक्ष्य सुरद्विपेन्द्रं
[3]करेणुविश्राणितपद्मनालम् ।
[4]निजप्रियाप्रेमरसान्विभाव्य
चिन्ताविषादस्तिमितोऽवतस्थे ॥ २६ ॥

---

1. नरेन्द्रसानोरिति मातृका । 2. शिशुर्नृसिंहः इति मातृका । 3. क्रमेण इति मातृका । 4. निजं प्रियाप्रेमरसान्विभाव्य इति मातृका ।

रोमन्थसंमीलितलोचनस्य
शृङ्गे निषण्णस्य रुरोः स्मरार्ताम् ।
कण्डूयमानां निजवामनेत्रं
मृगीमपश्यन्नरलोकपालः ॥ २७ ॥

महीपतिर्न्यस्तमणिप्रदीपा-
न्यास्तीर्णकल्पद्रुमपल्लवानि ।
[1] अत्यन्तरम्याणि सुराङ्गनानां
[2] गृहाणि पश्यन्मुमुदे स वीरः ॥ २८ ॥

विचित्रमन्दारगृहेषु तेषु
झङ्कारिरोलम्बसमावृतेषु ।
प्रयुज्य नृत्ताभिनयं भवानीं
सम्प्रीणयन्तीममरीं ददर्श ॥ २९ ॥

निषेदुषीभिः सह केलितल्पे
कान्तैः स कैलासदरीगृहेषु ।
शुश्राव शंभोस्त्रिपुरापदान-
मुद्गीयमानं सुरसुन्दरीभिः ॥ ३० ॥

नरेन्द्रसूनुर्नलिनायताक्षो
लयानुविद्धान् रसभावपूर्णान् ।
व्यलोकयच्चारणसुन्दरीणां
[3] विनोदलास्ये विविधान्प्रयोगान् ॥ ३१ ॥

ननन्द [4] पश्यन्स्खलदक्षराणि
विघूर्णमानारुणलोचनानि ।

---

1. ददर्श इति मातृका । 2. मुखानि इति मातृका 3. विवादलास्ये इति मातृका । 4. ननन्द वश्यमिति मातृका ।

मदालसानां सुरसुन्दरीणां
मुखानि मुग्धस्मितगर्भितानि ॥ ३२ ॥

अभ्यर्चितां कल्पतरुप्रसूनैः
कैलासकुञ्जे सह वल्लभेन ।
नृपो भवानीमुपवीणयन्तीं
विद्याधरीं वीक्ष्य मुदं प्रपेदे ॥ ३३ ॥

निषेदुषोः पल्लवकेलितल्पे
गाढं समाश्लिष्य परस्परेण ।
स पूर्वतः किन्नरयोर्विलोक्य
कयोश्चिदैकात्म्यरसं तुतोष ॥ ३४ ॥

कल्पद्रुमे विप्रियमाचरन्तं
संयम्य कान्तं रशनागुणेन ।
सन्ताड्य माल्येन रुषा रुदन्तीं
निरीक्ष्य काञ्चित्सदयो बभूव ॥ ३५ ॥

आवर्ज्य शाखाः सुरपादपानां
पुष्पाणि हुङ्कारिमधुव्रतानि ।
सञ्चिन्वतीं दर्शितबाहुमूलां
शातोदरीं वीक्ष्य मुदं ययौ सः ॥ ३६ ॥

वेगेन शैलादवतीर्णमारा-
[1]द्विद्याधरद्वन्द्वमसौ विलोक्य ।
कान्तावियोगं सहसा विचिन्त्य
कामी शुचान्तः परितापमाप ॥ ३७ ॥

---

1. द्विद्याधरं द्वन्द्वमिति मातृका ।

स विभ्रमान्विभ्रमभूषणानां
प्रियङ्करानप्यमराङ्गनानाम् ।
सेहे न [1] सन्तापकरं नितान्तं
पश्यन्नपि प्राणसमावियोगम् ॥ ३८ ॥

सुगन्धिपुष्पाणि सुशीतलानि
सुराङ्गनाभुक्तलतागृहाणि ।
व्यलङ्घयच्चारणगीतकीर्तिः
कान्तानि कल्पद्रुमकाननानि ॥ ३९ ॥

आधूय सन्तानलताप्रसूनं
स्पृष्ट्वा मुहुः स्वस्तटिनीपयांसि ।
तं क्लान्तवाहं मृगनाभिगन्धी
समीरणः श्रान्तिहरः शिषेवे ॥ ४० ॥

व्यलोकयत्सैकतलीनहंसां
गङ्गां स मृत्युञ्जयमौलिभूषाम् ।
शरीरिणां यत्पयसि प्रसन्ने
निमज्जतां जन्मभयं न भूयः ॥ ४१ ॥

अन्तर्हितां पद्मवनेन हंसीं
क्रन्दन्तमन्विष्य विलोक्य हंसम् ।
सञ्चिन्त्य तामेव नरेन्द्रसूनुः
सन्तापवेगात्स्तिमितो बभूव ॥ ४२ ॥

प्रसन्नगङ्गाजलपावनानि
फलाढ्यमन्दारमहीरुहाणि ।

---

1. सन्तापहरमिति मातृका ।

विवेश दिव्यानि निरामयानि
प्रशान्तसत्वानि तपोवनानि ॥ ४३ ॥

स्विन्नालिकान्भर्तृनियुक्तधर्मे
पर्याकुलान्व्याकुलकेशपाशान् ।
विलोकयन्प्रीतमना बभूव
मुग्धान्स वैखानसधर्मदारान् ॥ ४४ ॥

स शुष्मणां मध्यगतं चतुर्णां
प्रौढोष्मणां भास्वति दत्तदृष्टिम् ।
विश्वाधिके ज्योतिषि लग्नचित्त-
मूष्मायमाणाङ्गमृषिं ननाम ॥ ४५ ॥

पद्मासनस्थस्य नृपो महर्षेः
निरञ्जने ब्रह्मणि लीनबुद्धेः ।
दृष्ट्वांसकूटे निजकण्ठनालं
कण्डूयमानां हरिणीं ननन्द ॥ ४६ ॥

गन्धर्वविद्याधरसेव्यमानं
प्रच्छायकल्पद्रुमचारुतीरम् ।
नरेश्वरोऽध्वश्रमदीनवाहः
शुद्धोदमच्छोदमुपाससाद ॥ ४७ ॥

स तत्र चीनांशुकमण्डपेषु
नरेन्द्रभोगार्हपरिच्छदेषु ।
स मन्त्रिपुत्रो मदनातुरोऽपि
चक्रे शरीरस्थितिकार्यमार्यः ॥ ४८ ॥

---

४४. स्विन्नालिकान् स्वेदजलार्द्रललाटान् ।

[1] निष्टप्तजाम्बूनदपुत्रिकाभां
तामेव संस्मृत्य मृगायताक्षीम् ।
दिवानिशं चोत्कलिकाविरूढः
सन्तापमन्तर्बहिरासमाद ॥ ४९ ॥

गन्धर्वपुत्र्या विरहेण दीनः
करीव कान्तारपथे करिण्याः ।
तां दीर्घयामां नृपतिस्त्रियामा-
मुन्निद्र एव क्षपयांबभूव ॥ ५० ॥

अन्येद्युरुर्वीपतिमुज्जयिन्याः
कुशाग्रधीः कश्चिदुपेत्य दूतः ।
प्रणम्य साष्टाङ्गमुदारचेष्ट-
माज्ञां महीभर्तुरुदाजहार ॥ ५१ ॥

तव प्रसूर्वत्सवियोगखिन्ना
वशेव बालस्य वनान्तरेषु ।
उपैति सन्तापमनो विलम्बं
कर्तुं न युक्तं विदुषा त्वयेति ॥ ५२ ॥

निशम्य दूतस्य वचोऽनुरूपं
रथाङ्गनामेव दिनावसाने ।
विचिन्तयन्प्राणसमावियोगं
कामं कुमारः कलुषाशयोऽभूत् ॥ ५३ ॥

---

1. निस्तप्त इति मातृका ।

---

५२. बालस्य=पञ्चवर्ष वयसो कलभस्य, वशा करेणुः ।

सहाम्बया शक्रसमानकीर्तिः
जङ्गाल! कच्चित्कुशली गुरुर्मे ।
मनीषिणा सत्यपराक्रमेण
राजन्वती येन समुद्रनेमिः ॥ ५४ ॥

[1]इत्यूचिवांसं तमुवाच दूतः
सर्वत्र वार्तं त्वमेवहि नाथ!
अन्यत्र चक्षुष्फलमूलहेतो-
स्त्वद्भक्तसन्दर्शनभागधेयात् ॥ ५५ ॥

गुर्वाज्ञया निष्ठुरया विशङ्कं
दूरं प्रिये! त्वामपहाय यातः ।
नभस्वता चण्डबलेन वेगा-
न्मृणालिनीं रन्तुमना इवालिः ॥ ५६ ॥

आज्ञामलङ्घ्यामवगम्य पित्रो-
र्गच्छामि कृच्छ्राद्भवतीं विहाय ।
त्वमावयोः प्रेमवतोर्वरोरु-
रथाङ्गनाम्नोरिव विद्धि भावम् ॥ ५७ ॥

श्वासोऽस्ति चेत्त्वां पुनरागतोऽस्मि
द्रष्टुं प्रिये! मद्विरहेण दीनाम् ।
म्लानिं दिवा भानुमता प्रपन्नां
कुमुद्वतीं नक्तमिवामृतांशुः ॥ ५८ ॥

सन्देशमेवं मम रागवत्यै
प्रवासिनश्चित्ररथात्मजायै ।

1. इत्यूचितां सन्तमिति मातृका ।

हंसात्मजायै च वदेति [1] कश्चि-
न्महीभुजङ्गः कथयांबभूव ॥ ५९ ॥

पश्चात्त्वमस्मत्कुलराजधानीं
सेनां शनैः श्रान्तिमतीं नयेति ।
उक्त्वा कुमारः शुकनासमूनु-
मुत्तोरणामुज्जयिनीं प्रतस्थे ॥ ६० ॥

अग्रेसरश्चापभृतां नृपाणा-
मुत्सालमभ्रङ्कषगोपुराग्रम् ।
अध्यासितं द्राविडधार्मिकेण
मार्गे स चण्डीभवनं ददर्श ॥ ६१ ॥

तमग्रगण्यं विकृताकृतीनां
साक्षात्कलिं मूर्तमिवावलोक्य ।
सविस्मयो विस्मयनीयकीर्ति-
र्जहास मन्दं जगदेकवीरः ॥ ६२ ॥

श्रान्तं स तस्मिन्विनिवेश्य सैन्यं
तीव्रातपक्लान्तमुखारविन्दः ।
स्मरन्प्रियामेव विलुप्तधैर्यः
क्षपां कथञ्चिद्गमयांबभूव ॥ ६३ ॥

स तत्र तत्र क्षितिपाललोकै-
रभ्यर्चितः कैश्चिदहोभिरेव ।
प्रासादशृङ्गोल्लिखिताम्बुवाहां
प्राकारिणीमुज्जयिनीमवाप ॥ ६४ ॥

1. कश्चिदिति मातृका ।

तस्मिन्प्रविष्टे नरलोकनाथे
पुरीं विशालां पुरुहूतकल्पे ।
विलासिनीनां विविधानि तत्र
विचेष्टितान्युन्मदनान्यभूवन् ॥ ६५ ॥

काचित्कुमारागमनं निशम्य
[1]वार्तां विहायाप्तजनप्रणीताम् ।
उन्मुक्तलीलामतिरिद्धरागा
हर्म्याग्रमभ्रंलिहमारुरोह ॥ ६६ ॥

स्फुरत्प्रभासंहतिपाटलेन
माणिक्यकर्णाभरणेन काचित् ।
संभाव्य शङ्कग्रहमेकमेव
प्रायाद्गवाक्षं त्वरया मृगाक्षी ॥ ६७ ॥

स्नातोत्थिता काचन केशपाशा-
नादाय वान्ताम्बुकणान्करेण ।
संच्छिन्नकाञ्चीगुणमुक्तरत्ना-
मासौधमार्द्रां पदवीं चकार ॥ ६८ ॥

द्यूते श्लथीकृत्य च चुम्बनानि
[2]दीव्यन्त्यपूर्वाणि रहः प्रियेण ।
उत्थाय काचित्त्वरया तदानीं
ययौ वहन्त्येव गवाक्षमक्षान् ॥ ६९ ॥

इमं जनं मन्मथबाणलक्ष्यं
न वेत्सि नाथ! त्वयि बद्धभावम् ।

---

1. वा...विहाय इति मातृका । 2. दीप्यन्त्य इति मातृका ।

इति स्मरार्ता [1]गृहशारिकां स्वं
मनोरथं शिक्षयति स्म काचित् ॥ ७० ॥

अस्मिन्कुमारप्रतिमे कुमारे
वामोरु! भावस्तव चेद्वदेति ।
बाला रहः सस्मितमालपन्तीं
माल्येन धात्रीं निजघान काचित् ॥ ७१ ॥

काचित्कुमाराय विलोलतारै-
र्भ्रूभङ्गसंरंभविदोषरम्यैः ।
अशेषमन्तर्गतभावजातं
कटाक्षपातैः कथयांबभूव ॥ ७२ ॥

काचित्कुमारं सुकुमारमूर्तिं
नेत्रेण निष्पन्दिततारकेण ।
पिबन्त्यतृप्ता हृदयेन काम-
माखण्डलाय स्पृहयांबभूव ॥ ७३ ॥

नृपस्य नेत्राभिमुखं कदाचि
द्दिष्ट्या समापत्तिगतेऽक्षिपाते ।
ह्रीसन्नताकण्टकिताङ्गयष्टिः
पादेन भूमिं विलिलेख काचित् ॥ ७४ ॥

यथाभिलाषं नरनाथसूनुं
दृष्ट्वाभिसन्धिं मनसाऽनुभूय ।
सुखेन काचिन्मुकुलायताक्षी
सखीं समालिङ्ग्य चिरेण तस्थौ ॥ ७५ ॥

---

1. शारिका इति मातृका ।

दृष्ट्वा कुमारं स्मरबाणविद्धां
बालां पतन्तीमवशं पृथिव्याम् ।
आश्वासयत्कापि निमीलिताक्षीं
मोहेन चेलाञ्चलमारुतेन ॥ ७६ ॥

मुदं ययौ वीक्ष्य न पौरकान्ताः
कादम्बरीसक्तमानाः कुमारः
न पद्मिनीं प्राप्य हि भोगयोग्या
मान्यामलिर्वाञ्च्छति पुष्पजातिम् ॥ ७७ ॥

अनन्यजानिर्दयितानुरागा-
त्पराङ्मुखोऽभूत्प्रमदाजनेषु ।
न चातकः सन्निधिमाप्नुवत्सु
स्पृहां विधत्ते हि शरद्घनेषु ॥ ७८ ॥

आचारलाजैरथ राजसूनु-
मवाकिरत्पौरपुरन्ध्रिलोकः ।
संवर्तपाताः स्वपदात्पतद्भि-
र्नक्षत्रवृन्दैरिव मुक्तसानुम् ॥ ७९ ॥

[1]महीक्षितः तच्चरणारविन्दं
दूरादहंपूर्विकया समेताः ।
ववन्दिरे भक्तिविशेषनम्रैः
पर्यस्तचूडामणिभिः शिरोभिः ॥ ८० ॥

वैतालिकैः श्राव्यमुदारवाग्भिः
[2]संस्तूयमानस्वभुजावदानः ।

1. महीक्षितन्तच्चर इति मातृका । 2. संसूयमानः स्वभुजावदानः इति मातृका ।

अमात्यवर्गैरभिनन्द्यमानः
सन्मङ्गलं राजगृहं प्रपेदे ॥ ८१ ॥

उच्चावचाभिः कुलपालिकानां
आशीर्भिरुच्चैरभिवर्ध्यमानः ।
प्राग्द्वारवेदिस्थितपूर्णकुंभ
कक्षान्तरं भूमिपतेर्विवेश ॥ ८२ ॥

मध्येसभं दिग्विजयान्निवृत्तः
सिंहासनस्थं पितरं कुमारः ।
कोटीरबद्धाञ्जलिनानतेन
मूर्ध्ना ननाम स्पृहणीयकीर्तिः ॥ ८३ ॥

तं पादपीठे विनिवेश्य पुत्रं
प्रेम्णा नृपः [1]प्रश्रयनम्रमूर्तिम् ।
आनन्दबाष्पाविलमौलिरत्नं
मुहुर्मुहुर्मूर्ध्नि चिरेण जघ्रौ ॥ ८४ ॥

ततः स दृष्ट्वा जननीं च पश्चा-
दन्तः पुराण्यागमनोत्सुकानि ।
विवेश सन्मङ्गलमात्मगेहं
प्रध्मातशङ्खध्वनिमिश्रतूर्यम् ॥ ८५ ॥

न केवलं शून्यममंस्त काम-
मात्मानमेव प्रमदावियुक्तम् ।
पुरीं विशालामपि भोगयोग्या-
मनर्घरत्नप्रभवां च भूमिम् ॥ ८६ ॥

1. प्रश्रयनम्रनूर्तिरिति मातृका ।

वरतनुदृढलग्नभावबन्धः
शयनविवर्तनरूक्षिताङ्गरागः ।
मनसिजशरपातदीनदीनः
कथमपि तां क्षपयांबभूव रात्रिम् ॥ ८७ ॥

इति श्रीमत्सकलविद्याधरचक्रवर्तिचरणारविन्दशेखरस्य
श्रीराजराजसूनोः श्रीत्रिविक्रमस्य कृतौ
कादम्बरीकथासारसंग्रहाख्ये काव्ये
एकादशः सर्गः ।



# द्वादशः सर्गः

ततः कुमारस्य कुमारकीर्तेः
सपत्रलेखः किल मेघनादः ।
प्रियाविसृष्टः कुलराजधानी-
मुपेयिवान्कुन्तलवंशकेतोः ॥ १ ॥

ख्याता जगत्युज्जयिनीति नाम्ना
सिप्रातरङ्गाहततुङ्गसाला ।
यच्चन्द्रशालासु रवेस्तुरङ्गा
विश्रम्य विश्रम्य पुनःप्रयान्ति ॥ २ ॥

तस्यां समुत्तुङ्गविशालसालं
ध्वजाग्रसंघृष्टनवाम्बुदं तौ ।
महीजितां कुन्तलवंशजाना-
मपश्यतामम्बरलेहि धाम ॥ ३ ॥

तदिङ्गितज्ञैरपि सौविदल्लैः
प्रवेशितौ भूमिपतेरगारम् ।
विसारिणा तस्य महोमहिम्ना
क्षणं निरुद्धाविव तावभूताम् ॥ ४ ॥

प्रवृद्धतापः परिधूसराङ्गः
श्वासोष्मणा मर्मरिताधरोष्ठः ।
निजौजसा निह्नुतरत्नभासा
क्षीणोऽपि नालक्ष्यत राजसिंहः ॥ ५ ॥

सा रञ्जयन्ती चरणारविन्दं
महीपतेर्मौलिमणिप्रभाभिः ।
तेनैव सार्धं प्रणनाम मूर्ध्ना
स्वस्थानसामिच्युतकर्णपूरम् ॥ ६ ॥

उत्थाप्य तामुत्कलिकाधिरूढः
पश्यन्दृशा पक्ष्मलया कुमारः ।
सख्या समं चित्ररथात्मजायाः
पप्रच्छ वार्तं वदतां पुरोगः ॥ ७ ॥

समं सखीभिः समदुःखभाग्भिः
देव्या मनुष्येश्वर! विद्धि वार्तम् ।
नितान्तमेकान्तसुखैकहेतुं
विना भवद्दर्शनभागधेयम् ॥ ८ ॥

त्वां प्रस्थितं देव! समिद्धरागा
देवी भवद्दूतमुखान्निशम्य ।
अनुप्रयातेव विलुप्तसंज्ञा
प्राणैश्चिरेण स्तिमितावतस्थे ॥ ९ ॥

आश्वास्यमानाथ सखीजनेन
रागेण गाढं त्वयि रूढभावा ।
निनिन्द चात्मानमनिन्दिताङ्गी
मुहुर्मुहुर्दुष्कृतिभाजनं सा ॥ १० ॥

तदा प्रभृत्यन्तरुदीर्णरागा
पर्युत्सुका पाण्डुतराननश्रीः ।

कूलङ्कषा सा नभसीव सिन्धु-
लेभे न किञ्चिन्मनसः प्रसादम् ॥ ११ ॥

तन्व्याः प्रकृत्या नरलोकनाथ!
विशेषतस्त्वद्विरहात्कृशाङ्ग्याः ।
अन्तर्नमाति स्म मनोभवोऽस्या-
श्चन्द्रोदयात्पूरमिवाम्बुराशेः ॥ १२ ॥

मन्दानिलैः कोकिलकूजितैश्च
श्राव्यैर्विपञ्चीकणितैर्वराङ्ग्याः ।
जज्वाल सन्तापकरो मनोभू-
राज्यैर्हुतो वह्निरिव प्रणीतः ॥ १३ ॥

सखी प्रतीकारशतैः कुमारी
माश्वासयत्त्वद्विरहेण खिन्नाम् ।
वर्षैर्लतां तिग्मकरेण तप्ता-
मुपग्रहीनामिव मेघमाला ॥ १४ ॥

सा दुःखहेतुं नृपतेर्निवेद्य
समासतस्तच्चरितं प्रगल्भा ।
शरन्मयूरीव विलुप्तकेका
सद्यः परिम्लानमुखी व्यरंसीत् ॥ १५ ॥

स हेमकूटं च सखीजनं च
कादम्बरीमुत्तमसौकुमार्याम् ।
अनुस्मरंस्तद्गतभाववृत्तिः
द्विवान्कथञ्चिद्दिवसान्व्यनैषीत् ॥ १६ ॥

1. मेघमालामिति मातृका ।

स पत्रलेखासहितः कदाचित्
प्रियावियोगेन समिद्धरागः ।
समासदत्तीरनिलीनहंसां
शिप्रां मरुत्कम्पितदेवदारुम् ॥ १७ ॥

स तत्र वेगेन समापतन्तीः
श्रेणीः शुभावर्तवतीर्हयानाम् ।
पयोनिधेरूर्मिमयीरिवापो
विलोकयामास विशुद्धशुक्तीः ॥ १८ ॥

निर्वर्ण्य दूरादवरुह्य वाहा-
त्केयूरकः श्रान्तिजुषः कुमारम् ।
दूरानतेनाञ्जलिबन्धपूर्वं
मूर्ध्नाऽनमत्सुप्रजसं सुमेधाः ॥ १९ ॥

विशन्विशालामलकानवद्यां
पृष्टः कुमारेण समुत्सुकेन ।
स सर्पिषा वह्निमिवास्य रागं
सन्धुक्षयन्वाचमुवाच वाग्मी ॥ २० ॥

प्रतिक्षणं सा पितृनन्दितापि
मनोभुवो मङ्गलवैजयन्ती ।
अहर्निशं त्वद्विरहादनाथा-
ममन्यतात्मानमरालकेशी ॥ २१ ॥

भवद्वियोगव्यसनातिभारा-
त्क्षीणा शिरीषप्रसवोपमाङ्गी ।

न केवलं भूषणमेव काम-
    ममंस्त भारं सुमुखी शरीरम् ॥ २२ ॥

श्वासाश्च नेत्रादपि दीर्घदीर्घा
    मध्यादपि क्षामतरं शरीरम् ।
गुरुर्नितम्बादपि तीव्रतापो
    बिम्बाधराद्रागमयं मनोऽभूत् ॥ २३ ॥

अङ्गार्पणात्पुष्पमयी च शय्या
    ग्लानिं परां प्राप मृदुप्रवाला ।
भूषामृणालानि च भङ्गुराणि
    क्वाथात्परं प्रेमभवादभूवन् ॥ २४ ॥

यामावशेषासु निशासु बाला
    संविश्य पुष्पास्तरणे कथञ्चित् ।
कुतोऽधियातः कितवेत्युदीर्य
    व्यबुध्यतास्राविललो[1]चना सा ॥ २५ ॥

दिने दिने सा बहुले निकामं
    क्षीणाऽभवच्चान्द्रमसी कलेव ।
न केवलं [2]त्वद्विरहेण खिन्ना
    छायां च लावण्यमयीममुञ्चत् ॥ २६ ॥

तल्पेन पुष्पप्रकरास्तृतेन
    शीतोपचारक्रियया कुमारी ।
मृणालिनी पत्रभवैर्मरुद्भि-
    रश्लाघतां प्राप न कामतप्ता ॥ २७ ॥

---

1. लोचनां ताम् इति मातृका ।   2. मद्विरहेण इति मातृका ।

चित्स्पन्दमात्रायुरुदीर्णतापा
  कायस्य सन्देहतुलां प्रपन्ना ।
मां प्राहिणोत्तुभ्यमरालकेशी
  सरस्वते विष्णुपदीव पूरम् ॥ २८ ॥

अपत्रपिष्णुर्मदनातुरोऽपि
  प्रतिक्रियां कर्तुमसौ न शक्तः ।
करीव वन्योऽङ्कुशतीव्रघातै-
  रतप्यतान्तः कुसुमायुधास्त्रैः ॥ २९ ॥

अनूनतापोऽपि विलज्जमानः
  शीतोपचारानुचितानकुर्वन् ।
अरक्षदाकारमपि स्वमित्रा-
  न्न जीवितं मन्मथसायकेभ्यः ॥ ३० ॥

अभूतपूर्वां ह्रियमप्रगल्भः
  प्रियानुरागप्रभवां न सेहे ।
अनर्गलान्प्राणहराननूना-
  [1]न्सुदुःसहान्पञ्चशरस्य काण्डान् ॥ ३१ ॥

ततः प्रियादर्शनलुप्तहर्ष-
  स्तं विश्रमाय क्षितिपो नियुज्य ।
प्रयाणहेतोः प्रणयार्द्रचित्तो
  विकल्पचिन्तां विवशो विवेश ॥ ३२ ॥

1. न्मृदुः सहामिति मातृका ।

२८. सरस्वते समुद्राय विष्णुपदी गङ्गा पूरं प्रवाहमिव "सरस्वान् सागरोर्णवः, गङ्गा विष्णुपदी जह्नुतनया सुरनिम्नगा" इति अमरः ।

कथं गमिष्याम्यनिवेद्य पित्रे
स्वच्छन्दतः प्रेमवशात्प्रियायाम् ।
[1] निवेद्यते किं नु कथं नु पृष्टो
वक्तुं प्रभुः स्यां प्रभविष्णवेऽहम् ॥ ३३ ॥

एकत्र लज्जा निरुणद्धि यातां
अन्यत्र सन्धुक्षयति स्मरस्ताम् ।
तेनैव तन्मध्यगतोऽहमद्य
स्थातुं प्रयातुं च कथं प्रभुः स्याम् ॥ ३४ ॥

सखा दवीयान्शरणं विपत्सु
[2] विशिष्य कान्ताविरहोद्भवासु
अतोऽत्र कार्ये विरसेऽसहाये
कुत्रापि न स्पन्दितुमीशितास्मि ॥ ३५ ॥

इत्थं वितर्कैः कलुषीकृतात्मा
बाष्पाम्बुतिम्यन्नयनत्रिभागः ।
शय्यातलप्रान्तविवर्तनैस्तां
द्राघीयसीं रात्रिमसौ निनाय ॥ ३६ ॥

अन्येद्युराकर्ण्य जनात्कुमारः
सेनां निजां पङ्क्तिपुरं प्रपन्नाम् ।
[3] आनाय्य केयूरकमादरेण
प्रेमोत्तरं वाक्यमिदं जगाद ॥ ३७ ॥

---

1. निवेद्यते चेत्किन्नु कथं नु सृष्टो इति मातृका ।
2. अयं पादो मूले त्रुटितः ।
3. आनाम्य इति मातृका ।

प्राप्तः सखा पङ्क्तिपुरं ससैन्यो
[1]मा मे प्रयाणे तव संशयोऽभूत् ।
इत्यूचिवांसं तमुवाच धीमा-
न्केयूरकोप्यञ्जलिबन्धपूर्वम् ॥ ३८ ॥

देव ! त्वया गन्तुमहं न शक्तः
कालातिपातं न सहेत देवी ।
इत्थं गृणन्तं समुदीर्णतापो
नृपस्तमादिक्षत साधयाशु ॥ ३९ ॥

प्रेष्ठो भव त्वं मम पृष्ठतस्ते
द्रष्टुं प्रियामेमि समुत्सुकां ताम् ।
अग्रेसरं प्रातरनूरुमर्क-
मृणालिनीं भानुरिवानुरक्ताम् ॥ ४० ॥

आहूय संमान्य च पत्रलेखां
नरेन्द्रसूनुर्निरदिक्षदेवम् ।
त्वं पत्रलेखे ! सह मेघनाद
केयूरकाभ्यां व्रज हेमकूटम् ॥ ४१ ॥

यां वीक्ष्य मुग्धात्मवियोगदुःखं
सहिष्यते तत्प्रथमं मृगाक्षी ।
तत्रैव मां त्वं प्रतिपाल्य तिष्ठेः
यत्र स्थिता हंससुतासखीति ॥ ४२ ॥

इत्थं निगद्य प्रजिगाय भूय-
स्तां मेघनादं च नृपः प्रियायै ।

---

2. मम प्रया प्रयाणे तव सशयोभूत् इति मातृका ।

काले मधुं माधवमाशु जेतुं
जगन्ति पुष्पेषुरिवाम्रवल्यै ॥ ४३ ॥

ततः सपित्रानुमतः कुमारः
प्रयाणतूर्याहृतराजलोकः ।
निष्पत्य पुर्याः शुकनाससूनुं
प्रेम्णा दिदृक्षुः सहसा जगाम ॥ ४४ ॥

स राजचिह्नान्यपहाय दूरा-
द्द्वित्रैस्तुरङ्गैर्जवनैरुपेतः ।
प्रेम्णा यथापूर्वमनाथभावः
सेनानिवेशं सहसा विवेश ॥ ४५ ॥

[1] अपोढनानाविधकार्यजाता-
नुद्भिन्नबाष्पाम्बुकषायिताक्षान् ।
विलुप्तधैर्यान्स ददर्श सैन्या-
न्वाक्यादृते व्यञ्जितदुःखभारान् ॥ ४६ ॥

कस्मिन्प्रदेशे मतिमान्सखेति
पृच्छन्तमन्तर्गतभावदोषम् ।
नरेन्द्रमालोकयतां जनानां
मनो बभूव प्रतिपत्तिमूढम् ॥ ४७ ॥

ते राजलोकाः प्रणिपत्य मूर्ध्ना
विषादलुप्तात्ममनःप्रसादाः ।
अवाङ्मुखा ह्रीविजिता नितान्तं
न किञ्चिदूचुः शुकनाससूनुम् ॥ ४८ ॥

1. अवोढकार्यान्तरकर्मजातानुद्भिन्नबाष्पाम्बुनषायणोऽभूत् । इति मातृका ।

चिरं वितर्काकुलितेन कामं
तेनानुयुक्तो नृपनन्दनेन ।
स राजलोकः प्रणिपातपूर्वं
व्याज्ञापयत्तच्चरितं प्रगल्भः ॥ ४९ ॥

देव! प्रयाते त्वयि राजधानी-
ममात्यपुत्रं शिबिरे नियुज्य ।
अच्छोदमासाद्य [1]सहर्षमेषः
तत्रैव चिन्तास्तिमितो न्यषीदत् ॥ ५० ॥

लतानिकुञ्जेष्वपि पुष्पितेषु
रम्येषु चाच्छोदसरस्तटेषु ।
स पुष्पवाटीषु च शीतलासु
पर्यभ्रमत्स्वैरमिवोन्मदिष्णुः ॥ ५१ ॥

किं पूर्वजन्मान्तरभावदोषात्
किं वा निजान्तःकरणप्रमोषात् ।
[2]किमित्यहं नाथ! न वेद्मयशङ्कं
मतिभ्रमं तस्य विधिर्व्यतानीत् ॥ ५२ ॥

स उन्मनाः कामचरः प्रकामं
दृढप्रतिज्ञो विविधैरुपायैः ।
निषादिनां वन्य इव द्विपेन्द्रः
प्रजेश्वरास्माक[3]मनाश्रवोऽभूत् ॥ ५३ ॥

---

1. सहर्षमाण तत्रैव चिन्तास्तमितेऽन्यजीददिति मातृका । 2. किमत्यहन्नाथ नवेद्मयशङ्कमिति मातृका । 3. मनाश्रयोऽभूत् इति मातृका ।

---

५३. हितमुपदिष्टं यः श्रृणोति स आश्रवः; "वचने स्थित आश्रवः" इत्यमरः । तथाच हितमुपदिष्टं यः न श्रृणोति स अनाश्रव इत्यर्थः ।

उच्चावचैरुत्सुकधीर्वचोभि
[1]र्न बोधितः शान्तिमुपागतोऽभूत् ।
सिक्तोऽप्यधृष्यः पयसां प्रवाहै
रैरंमदो वह्निरिव प्रवृद्धः ॥ ५४ ॥

महानुभावस्य कुशाग्रबुद्धे-
[2]र्न श्वोवशीयं चरितं तवेति ।
उदर्करम्यैरपि युक्तियुक्तै-
र्न संगृहीतो न च सान्त्ववादैः ॥ ५५ ॥

किमम्बया किं जनकेन तेन
किं वा कुमारेण किमुज्जयिन्या ।
अहं भवद्भिर्न तु सङ्गतः स्यां
यूयं पुरः साध्रयतेत्यवादीत् ॥ ५६ ॥

श्राव्यैर्वचोभिः परितप्यमानो
वशंवदो नायमभून्मदान्धः ।
कालाद्बहोः शान्तिजुषा बलेन
प्राप्ता वयं सम्प्रति देवपादम् ॥ ५७ ॥

तेषां मुखात्तच्चरितं निशम्य
दुःखासहिष्णुः श्रुतिदुःसहं सः ।
मन्थाचलोद्वृत्तइवाम्बुराशि-
श्चिरेण चिन्ताकुलितो बभूव ॥ ५८ ॥

---

1. निवेदुर इति मातृका । 2. नश्वोरसीयं इति मातृका ।

---

५५. श्वोवश्रीयं श्वः क्षेमंकरमित्यर्थः ।

तेनानुभूतान्यतिदुःसहानि
जन्मान्तराणीव दशान्तराणि ।
सञ्चिन्तयन्नात्मविना कृतानि
धीरोऽपि पर्यश्रुरभूत्कुमारः ॥ ५९ ॥

विद्या च सा ज्ञानमभङ्गुरं त-
[1]द्घृणा च ते सैव कृतज्ञता च ।
मयि स्थिरप्रेम्णि विनैव हेतु
[2]मभूतपूर्वं कथमेवमासीत् ॥ ६० ॥

इत्थं विषादेन विलप्य कामं
तत्रैव नीत्वा रजनीं कुमारः ।
प्रातः प्रयाणोन्मुखराजलोकः
पुरीं विशालां पुनराससाद ॥ ६१ ॥

इति विपदि निमग्नो दूरसंस्थे कुमारः
सुहृदि [3]गतमनस्कः सेव्यबृन्दानुयातः ।
ग्रहगणपरि[4]वीतो क्षीणकान्तिर्दिनादौ
विधुरिव चरमाद्रिं राजधानीं जगाम ॥ ६२ ॥

इति श्रीमत्सकलविद्याधरचक्रवर्तिचरणारविन्दशेखरस्य
श्रीराजराजसूनोः श्रीत्रिविक्रमस्य कृतौ
कादम्बरीकथासारसंग्रहाख्ये काव्ये
द्वादशः सर्गः ।



1. द्गुणा च इति मातृका । 2. प्रसमयपूता इति मातृका । 3. शतमनस्कैः सेव्यबृन्दारयातः इति मातृका । 4. परिपीतो इति मातृका ।

# त्रयोदशः सर्गः ।



स तत्र पुञ्जीभवतः पुरस्ता-
    दुद्भिन्नबाष्पप्रसराविलाक्षः ।
ददर्श दीनार्तिहरोऽपि दीनः
    पौरान् परिम्लानमुखप्रसादान् ॥ १ ॥

अग्रे प्रयातौ शुकनासगेहं
    निशम्य मातापितरौ कुमारः । *



*एतावत्येव मातृका ।

श्रीः

# कादम्बरीकथासङ्ग्रहस्थ

## श्लोकानुक्रमणिका

